# श्रीदर्शनशुद्धिप्रकरणम् ।

आवृत्तिः- प्रथमा । प्रतय -५००
वि. सं. २०४५ पौषकृष्णप्रतिपदा ।

मुद्रण सहकारः
**नवनीत जे. महेता**
'सागर प्रिन्टर्स' मोदीनुं डेहलुं
पादशाहनी पोल-रिलीफरोड.
अमदावाद-३८०००१

मुद्रक :
**पुजा प्रिन्टर्स अेन्ड ट्रेडर्स**
नारायणनिवास
मेहंदीकुवा चार रस्ता,
शाहपुर-अमदावाद.

प्राप्तिस्थानम् ।

**श्रीमोक्षैकलक्षी प्रकाशन**
C/o शा. सूर्यकान्त चतुरलाल
मु. पो. मुरबाड. [जि. ठाणे]

C/o **शा. मुकुंदभाई रमणलाल**
५ नवरत्न. ओपेरा सोसा. नं. २ नी सामे
नवाविकासगृह मार्ग. पालडी
अमदावाद-३८०००७

C/o **विजयकर कान्तिलाल झवेरी**
जहापनाहनी पोळ. कालुपुररोड.
अमदावाद-३८०००१

॥ णमोऽत्थु णं समणस्स भगवओ महावीरस्स ॥

# ॥ श्रीदर्शनशुद्धिः ॥

नमः श्रीवर्धमानाय निस्सीमज्ञानचक्षुषे जितान्तरारिवर्गाय सम्यक्तत्त्वार्थदेशिने ॥ १ ॥
दर्शनशुद्धेर्वृत्तिं वक्ष्ये प्रयतः समयनीत्या । मन्दमतिबोधवृद्ध्यै स्मरणार्थं चात्मनः सततं ॥ २ ॥
जिनवदननलिनसदना विबुधासुरमनुजवृन्दवन्द्यपदा । सर्वाङ्गसुन्दरतनु–र्वाग्देवी वसतु मे हृदये ॥३॥
व्याख्यातुं विषमागमार्थनिचित गाम्भीर्य मुद्राश्चितम् । श्रीचन्द्रप्रभसूरिभिर्विरचितं ग्रन्थं कुधीः कोऽस्म्यहं ॥

किंतु श्रीविमलाभिधानगणिभिः क्षुण्णोऽयमध्वाधिकं ।
चेतोऽस्मिन्निति मादृशामपि पदन्यासार्थमुत्कण्ठते ॥ ४ ।

इहानादितादात्म्यसंबंधारूढगाढमिथ्यात्वतिमिरान्तरितविवेकलोचनमविरतप्रवृत्तानिरतित्रिपथगाविषमविषावेगविह्वस्त-चेतसमुत्कटकटुकषायोदग्रग्रहग्रासावेपविह्वलमप्रतिमप्रसादमदिरामदमेदुरमुदारदुरधिपहशारीरमानसानेकदुःखजातसमुद्रप्रपा-तनष्टचेतनमत्यन्तप्रबलकलिकालवशविलुप्यमानायुर्बलबुद्धिविभवं भव्यप्राणिगणमवलोक्य समुत्पन्नपरमकारुण्यरसतरङ्गरङ्गि-तान्तःकरणः स्वपरसमयापारपारावारपारदृश्वा चारित्रमहाराजराजधानीयमानमूर्तिः सुग्रहीतनामधेयः श्री चन्द्रप्रभसूरिस्त-

दनुग्रहाय नित्यानंदसुखोपायभूतमर्हत्प्रवचनार्णवनिष्पन्दबिन्दुकल्पतरं दर्शनशुद्धिप्रकरणमुपदिदिक्षुः प्रत्यूहव्यूहापोहार्थं शिष्टसमयानुवर्तनार्थं च भावमङ्गलप्रतिपादकं श्रोतृजनप्रवृत्तिनिबंधनाभिधेयप्रयोजनसंबंधाभिधायकं च प्रथममेव गाथायुग्ममाह—

॥ मूलम् ॥——पत्तभवण्णवतीरं दुहदवनीरं सिवंबतरुकीरं ।
कंचणगोरसरीरं नमिऊण जिणेसरं वीरं ॥ १ ॥

वुच्छं तुच्छमइणं अणुग्गहत्थं समत्थभव्वाणं । सम्मत्तस्स सरूवं संखेवेणं निसामेह ॥ २ ॥

व्याख्या——सा च समुदायभेदतात्पर्यभेदात् त्रिधा, तत्र तावत् प्राप्तभवार्णवतीरमित्यादिविशेषणविशिष्टं जिनेश्वरं वीरं नत्वा तुच्छमतीनां समस्तभव्यानामनुग्रहार्थं सम्यक्त्वस्य स्वरूपं संक्षेपेण वक्ष्यामीति समुदायार्थः । अथ भेदव्याख्यानं सतात्पर्यमुच्यते——तत्र 'पत्तभवण्णवतीरंति' प्राप्तमुपलब्धं भवार्णवतीरं संसाराम्भोधितटं येन स तथा त 'दुहदवनीरंति' दुःखमसातं तदेव दवो वनवह्निः संतापसाधर्म्यात् तस्य निर्वापकत्वेन नीरमिव नीरं यथाहि दवदहनसम्बन्धविधुरितास्तरवः सजलजलदवृष्टया विशिष्टां सम्पदमासादयन्ति । तथा प्राणिनोऽपि रोगजरामरणादिदुःखसन्ततिसन्तप्ता भगवद्देशनया सततानन्दसुखभाजो भवन्तीति गाथार्थः । 'सिवंबतरुकीरंति' शिवमपवर्गस्तदेवाम्रतरुश्चूतद्रुमस्तत्र कीर इव कीरः शुकः, तत्रायमर्थो यथाहि शुकः सहकारतरौ निर्भरानन्दः सदा रमते, तथासौ भगवानपि शिवे इति । 'कंचणगोरसरीरंति' काञ्चनं स्वर्णं तद्वद्गौरं पीतवर्णं शरीरं यस्य स तथा तम् , अनेन शेषानपि शरीरातिशयान् सूचयति ।

नत्वा प्रणम्य 'जिणेसरंति' जयन्ति रागाद्यरातीनिति जिनाः सामान्यकेवलिनस्तेषु वक्ष्यमाणाष्टमहाप्रातिहार्याद्यै-

श्वर्ययोगादीश्वरो जिनेश्वरस्तं 'वीरंति' विशेषेण विविधं वा ईरयति क्षिपत्यष्टप्रकारं कर्मेति वीरो विदारयति यत्कर्म तपसा च विराजते। तपोवीर्येण युक्तश्च तस्माद्वीर इति स्मृत, इति निरुक्ताद्वा वीरोऽपश्चिमतीर्थाधिपतिस्तं 'वुच्छं तुच्छमईणं' इत्यादि. तुच्छाल्पा गुरुतरशास्त्रबोधाद्यक्षमा मतिर्बुद्धिर्येषां ते तथा तेषामनुग्रहार्थमुपकृतये 'समत्थभव्वाणंति' भव्या मुक्तिगमनयोग्याः प्राणिनस्तदितरेषामुपकारानर्हत्वात्, ततश्च समस्ताश्च ते भव्याश्च समस्तभव्यास्तेषां, समस्तग्रहणं च भव्यजन्तुष्वनुग्रहं प्रत्यविशेषार्थम्। यद्वा समर्थभव्यानां, तेषामेव धर्मोपदेशानुग्रहेऽधिकारित्वात्, यदाह--अथ समर्थः शास्त्रेणापर्युदस्तश्च धर्मेऽधिक्रियते, समर्थाश्च ये शुद्धं धर्ममनुतिष्ठन्तः पित्रादिभ्यो न विभ्यति त इह ग्राह्या। यदाह--होइ समत्थो धम्मं कुणमाणो जो न वीहइ परेसिं। माइपिइसामिगुरुभाइ--याणधम्माणभिणाणंति ॥१॥ 'सम्मत्तस्स सरूवंति' सम्यगित्येतस्य भावः सम्यक्त्वं वक्ष्यमाणलक्षणं, तस्य स्वरूपं याथात्म्यं, संक्षेपेण समासेन 'निसामेहत्ति' निशाम्यताकर्णयत, श्रवणं प्रत्यवहिता भवत! शिष्याभिमुखीकरणमेतद्, अनेन पराङ्मुखमपि प्रतिवोधयतो व्याख्यातुर्धर्म एवेति ख्यापितं भवति। तथा च वाचकः--

"न भवति धर्मः श्रोतुः सर्वस्यैकांततो हितश्रवणात्। ब्रुवतोऽनुग्रहबुद्ध्या वक्तुस्त्वेकान्ततो भवति ॥१॥" इह च प्रथमगाथासूत्रेणेष्टदेवतानमस्काररूपं भावमङ्गलमुक्तं, द्वितीयगाथया तु 'सम्मत्तस्स सरूवंति' पदेनाभिधेयं 'तुच्छमईणं अणुग्गहत्थं समत्थभव्वाणंति' अवयवेन गुरोरनन्तरप्रयोजनं च साक्षादभिहितं, तथा शिष्यानन्तरप्रयोजनं सम्यक्त्व-स्वरूपावगमः, परम्परन्तु द्वयोरपि निःश्रेयसावाप्तिरिति विज्ञेयम्। सम्बन्धस्तु सामर्थ्यगम्यः, स च शास्त्राभिधेययोर्वा-

च्यवाचकभावः, शास्त्रप्रयोजनयोस्तूपायोपेयलक्षण इति । अथ शिवाम्रतरुकीरमित्यस्मिन् सति प्राप्तभवार्णवतीरमिति कथं नानर्थकमेकार्थत्वात्, काञ्चनगौरशरीरमित्येतदपि शिवपदप्राप्तस्य मूर्तेरसत्वेन दुरवगमं, दुखदवनीरमित्येतदपि अशरीरस्य वाग्योगाभावेन दुर्घटं, जिनेश्वरमिति विशेष्यपदमपि दुरुपपादं, तत्र सर्वेषां समानत्वाद्. एतेषु वा सत्सु शिवाम्रतरुकीरमिति विरुद्धमिति सर्वमसमञ्जसमिति । तदयुक्तमभिप्रायापरिज्ञानाद् इह हि भगवतश्छद्मस्थाद्यवस्थात्रयेऽपि ग्रन्थकर्तुर्नमस्कारः कर्तुमभिमतस्ततश्च प्राप्तभवार्णवतीरमिति तीरासन्नमपि तीरमुपचाराद् यथा गङ्गासमीपोऽपि देशो गङ्गेति, तदनेन छद्मस्थावस्थैव विवक्षिता । यतः प्रतिपन्नानुत्तरविरतिश्रुतावधिमनःपर्यवज्ञानसम्पन्नः सुतीव्रतरतपःसंयमानुष्ठानरतिस्तस्यामप्यवस्थायां संसाराम्भोधितटवर्त्येव वर्तते भगवान् । दुःखदवनीरं जिनेश्वरमित्याभ्यां च केवल्यवस्था सूचिता । तत्र हि निर्जितदुर्जयान्तरारिवारः प्रतिहतघनघातिकर्मा धर्ममुपदिशति । प्रातिहार्याद्यैश्वर्यं वा शेषजिनेभ्योऽधिकमधितिष्ठति। काञ्चनगौरशरीरमित्यवस्थाद्वयेऽपि तुल्यमुभयत्रापि सशरीरत्वाद् । शिवाम्रतरुकीरमित्यनेन तु सिद्धावस्थेति सर्वं सुस्थम् । अन्ये त्वन्यथा समादधति--प्राप्तमुपलब्धं पूर्वमसद्ज्ञानक्रियाभ्यासाद्भवार्णवतीरं येनेत्यनेनानादिसिद्धमतव्युदासः । तथा दुःखदवनीरमित्यनेन संहारादिकर्तृपरपरिकल्पिताप्तपरिक्षेपः । शिवाम्रतरुकीरमिति प्रतिनियतसिद्धस्थानोपदर्शनेन यत्कैश्चिदुक्तं--गुणसत्वान्तरज्ञानान्निवृत्तप्रकृतिक्रियाः । मुक्ताः सर्वत्र तिष्ठन्ति व्योमवत्तापवर्जिताः ॥१॥ इत्यादि, तन्निरस्यति, काञ्चनगौरशरीरमित्यनेन त्वशरीरमुपदेष्टारं प्रत्याचष्टे, तदुक्तं कैश्चित्—अपाणिपादो ह्यमनोग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति विश्वं न च तस्य वेत्ता तमाहुरग्र्यं पुरुषं पुराविदः ॥१॥ इति ।

जिनेश्वरमित्यमुना तु सरागसिद्धस्य प्रतिबन्धः, यदाहुः केचन--ज्ञानिनो धर्मतीर्थस्य कर्तारः परमं पदं । गत्वागच्छन्ति भूयोऽपि भवं तीर्थनिकारतः ॥१॥ इति । स्तुतिलक्षणं चेदं, तत्किल स्तोतव्यस्वार्थपरार्थसंपत्ती सोपाये वक्तव्ये, तत्र शिवाम्रतरुकीरमित्यनेन स्वार्थसम्पत्तिः, दुःखदवनीरमित्यनेन परार्थसम्पत्तिः, जिनेश्वरमित्यमुना तु द्वयोरप्युपायः प्रतिपादित इत्यलं विस्तरेणेति गाथाद्वयार्थः ॥१॥२॥ इदानीं संक्षेपेणेति यदुक्तं तत्रोपपत्तिमाह--

॥ मूलम् ॥--**सुयसायरो अपारो आउं थोवं जिया य दुम्मेहा ।**

**तं किंपि सिक्खियव्वं जं कज्जाकरं च थोवं च ॥ ३ ॥**

व्याख्या--श्रुतसागरोऽपारइत्यादिककारणसद्भावात्समस्तप्रवचनाध्ययनाद्यसमर्थेन तत्किमपि शिक्षणीयं यत्कार्यकारि च स्तोकं चेति गाथासमासार्थः। अक्षरार्थः पुनरेवं--श्रुतमेव सागरः समयमहोदधिर्गाम्भीर्यसाधर्म्यादपारोऽदृश्यपरकूलः। तथायुर्जीवितं स्तोकमल्पं दुःषमानुभावाद् , जीवाः प्राणिनः पुनर्दुर्मेधसो मन्दबुद्धयो दुःषमानुभावादेव, तथा च दुःषमास्वरूपं--विज्जाण य परिहाणी पुप्फफलाणं च ओसहीणं च । आउयसुयरिद्धीणं संठाणुच्चत्तधम्माणं ॥१॥ ततश्च तत्किमपि शिक्षणीयमभ्यसनीयं यत्किंचित्कार्यकारि च, ऐहिकामुष्मिकार्थप्रसाधकम् । तथा स्तोकमल्पं च । चकारौ विशेषणद्वयस्य तुल्यकक्षतां लक्षयतः । तदनेन विशेषावश्यकादिग्रन्थेषु विस्तरतः प्रोक्तेऽपि सम्यक्त्वस्वरूपे संक्षिप्तमिदं सुतरां प्रकरणमुपादेयमिति सूचयतीति गाथार्थः ॥३॥ इह च लब्धात्मलाभस्य वस्तुनः स्वरूपनिरूपणमुपपत्तिमदिति प्रथमं भावसम्यक्त्वलाभप्रकारमाह--

॥ मूलम् ॥—मिच्छत्तमहामोहंधयारमूढाण इत्थ जीवाणं ।
पुन्नेहिं कहवि ज्ञायइ दुलहो सम्मत्तपरिणामो ॥ ४ ॥

व्याख्या—महांश्चासौ दुरुच्छेदत्वेन गुरुस्थितिकत्वेन च मोहश्च महामोहो, मिथ्यात्वं विपर्यासहेतुस्तच्चासौ महामोहश्च मिथ्यात्वमहामोहो मिथ्यात्वमोहनीयमिति हृदयम् मोहो एवान्धकारः सदर्शननिरोधकत्वेन, तेन मूढा विवेकविकलास्तेषां जीवानामिति सम्बन्धः। 'इत्थत्ति' इहास्मिन् संसारे पुण्यैः पुण्यप्रकृतिभिः पञ्चेन्द्रियजातित्रसबादरपर्याप्तप्रभृतिभिर्हेतुभूताभिस्तदभावे सम्यक्त्वलाभायोगात्। कथमपीत्यनेन कष्टप्राप्यत्वप्रकारमाह—तथाहि सप्तानां ज्ञानावरणादिकर्मप्रकृतीनां स्थितौ यथाप्रवृत्तिकरणेन पल्यकादिदृष्टान्ततः कोटाकोटेरभ्यन्तरीभूतायां तल्लाभसम्भवाद्. यदाह—सत्तण्हं पयडीणं अब्भितरउ य कोडाकोडीणं। काऊण सागराणं जइ लहइ चउण्हमणयरं ॥१॥ जायते उत्पद्यते दुर्लभो दुःप्रापोऽनेन कृतग्रन्थिभेदस्याप्यनन्तानुबन्धिनामुदयनिरोधेनैव तदवाप्तिं सूचयति। यदभिहितं—पढमिल्लुयाण उदए नियमासंजोयणाकसायाणं। सम्मदंसणलंभं भवसिद्धियावि न लहंतित्ति ॥१॥ सम्यक्त्वं चासौ परिणामश्च सम्यक्त्वपरिणामस्तत्त्वश्रद्धानाध्यवसायोऽनेनात्मपरिणाम एव सम्यक्त्वमित्युक्तं भवति, एतच्चोपरितनगाथायां न्यक्षेण वक्ष्यतीति गाथार्थः ॥४॥ तदेवाह—

॥ मूलम् ॥—देवो धम्मो मग्गो साहू तत्ताणि चेव सम्मत्तं ।
तव्विवरीयं मित्थत्त—दंसणं देसियं समए ॥ ५ ॥

व्याख्या—देवो धर्मो मार्गः साधवस्तत्त्वानि चैव, विषयविषयिणोः कथंचिदभेदादेतद्विषयं श्रद्धानं सम्यक्त्वं

समवति सम्यगवैपरीत्येनावगच्छति देवादितत्त्वमिति सम्यग्ज्ञानमात्मा तस्य भावः सम्यक्त्वं, सम्यक्त्वमोहनीयकर्माणुक्षयक्षयोपशमसमुत्थात्मपरिणामरूपं. उक्तं हि—से य सम्मत्ते पसत्थसम्मत्तमोहणीयकम्माणुवेयणोवसमखयसमुत्थे पसमसंवेगाइलिंगे सुहे आयपरिणामे पण्णत्तेत्ति । चः समुच्चये, एवोऽवधारणे । तस्यैव फलं दर्शयति—'तव्विवरीयमित्यादि' तेषु देवादिषु विषये विपरीतं, भावप्रधानत्वान्निर्देशस्य विपर्यासोऽतद्रूपेषु तद्रूपताबुद्धिस्तद्रूपेष्वतद्रूपताबुद्धिश्च, यदिवा तद्विपरीतं देवादिश्रद्धानविपरीतमर्थस्तु स एव । मिथ्यात्वदर्शनं वितथाavबोधो देशितं कथितं समये सिद्धान्ते । ननु तत्त्वार्थश्रद्धानं सम्यक्त्वमित्येतदेव वाच्यं, देवसाध्वोर्जीवतत्त्वे, धर्ममार्गयोश्च शुभाश्रवे संवरेऽन्तरभावादिदमेव च ग्रन्थान्तरेष्वपि सम्यक्त्वस्वरूपमुपलभ्यत इति । सत्यं, तथापि देवादीनां धर्मसर्वस्वभूतत्वात् तद्विपर्यासे च सर्वानुष्ठानवैफल्यात् प्रतिदिनपूज्यत्वानुष्ठेयत्वाश्रयणीयत्वोपास्यत्वलक्षणोपयोगाच्च पृथगुपादानमिति द्वारगाथासमासार्थः ॥५॥ व्यासार्थं तु समस्तग्रन्थेन स्वयमेव वक्ष्यति, तत्र यथोद्देशं निर्देश इति न्यायात्प्रथमं देवतत्त्वं विवृणोति—

॥ मूलम् ॥—**चउतीसअइसयजुओ अट्ठमहापाडिहेरकयसोहो ।**
**अट्ठदसदोसरहिओ सो देवो नत्थि संदेहो ॥६॥**

व्याख्या—चतुर्भिरधिका त्रिंशत् चतुस्त्रिंशत्, अतिशिष्यते विशेष्यते एभिरितरशास्तृभ्यो भगवानित्यतिशया उत्कर्षास्तैर्युतः सहितस्तथाष्टमहाप्रातिहार्यकृतशोभ इति, प्रतिहारो राजदौवारिकस्तस्य कर्म प्रातिहार्यं, तच्च सततसन्निधानवर्तित्वं, तद्वा यानि देवैर्विधीयन्ते तानि तथा, महान्ति च तानि प्रातिहार्याणि च, अष्ट च तानि महाप्रातिहार्याणि

च वक्ष्यमाणानि तैः कृतशोभं प्राप्तत्रिलोकाभ्यधिकश्रीस्तं, तथाष्टादशभिर्दोषैर्दुषणैर्वक्ष्यमाणै रहितो विप्रमुक्तो यः स एव देव आप्तो भवतीति शेषः, नास्त्यत्र सन्देहोऽस्यैव दृष्टेष्टाविरुद्धाविसंवादिवचनत्वविश्वसनीयत्वलक्षणाप्तलक्षणयोगादिति गाथार्थः ॥६॥ सविभागमतिशयानेव स्तवद्वारेणाह—

॥ मूलम् ॥—चउरो जम्मप्पभिई । एक्कारस कम्मसंखए जाए ॥
नव दस य देवजणिए चउतीसं अइसए वंदे ॥७॥

व्याख्या—पाठसिद्धा, नवरं सम्यक् क्षयः सङ्क्षयः सर्वघात इत्यर्थः, कर्मणां सङ्क्षयः कर्मसङ्क्षयः, स च घातिकर्मणामेवेति ज्ञेयम् ते चामी—तेषां च देहोद्भूतरूपगन्धो निरामयः स्वेदमलोज्झितश्च ॥ श्वासोऽब्जगंधो रुधिरामिषन्तु । गोक्षीरधाराधवलं ह्यविस्रं ॥१॥ आहारनीहारविधिस्त्वदृश्य—श्चत्वार एतेऽतिशयाः सहोत्थाः । क्षेत्रेस्थितिर्योजनमात्रकेऽपि नृदेवतिर्यग्जनकोटिकोटेः ॥५॥ वाणी नृतिर्यक्सुरलोकभाषासंवादिनी योजनगामिनी च । भामण्डलं चारु च मौलिपृष्ठे विडम्बिताहर्पतिमण्डलश्रि ॥३॥

साग्रे च गव्यूतिशतद्वये रुजो वैरेतयो मार्यतिवृष्ट्यवृष्टयः । दुर्भिक्षमन्यस्वकचक्रतो भयं स्यान्नैत एकादश कर्मघातजाः ॥४॥ खे धर्मचक्रं चमराः सपाद—पीठ मृगेन्द्रासनमुज्ज्वलं च । छत्रत्रयं रत्नमयध्वजोङ्घ्रिन्यासे च चामीकरपङ्कजानि ॥५॥ वप्रत्रयं चारुचतुर्मुखाङ्गता चैत्यद्रुमोऽधोवदनाश्च कण्टकाः । द्रुमानतिर्दुन्दुभिनाद उच्चकै—र्वातोऽनुकूलः शकुनाः प्रदक्षिणाः ॥६॥ गन्धाम्बुवर्षं बहुवर्णपुष्पवृष्टिः कचश्मश्रुनखाप्रवृद्धिः । चतुर्विधामर्त्यनिकायकोटिर्जघन्य-

भावादपि पार्श्वदेशे ॥७॥ ऋतुनामिन्द्रियार्थानामनुकूलत्वमित्यमी । एकोनविंशतिर्दिव्याश्चतुस्त्रिंशच्च मिलिताः ॥८॥ इति ॥७॥ सम्प्रति प्रातिहार्याण्याह—

॥ मूलम् ॥—कंकेल्लिकुसुमवुट्ठी दिव्वज्झुणि चामरासणाइं च ।
भावलयभेरिछत्तं जयंति जिणपाडिहेराइं ॥ ८ ॥

व्याख्या—'जयंति—'शेपाप्तमहिमानमधः कुर्वते, कानि ? कङ्केल्लिप्रभृतीनि जिनप्रातिहार्याणीति सम्बन्धः । तत्र कङ्केल्लिर्दिनकरकरप्रसरावारकोऽशोकवृक्षः, एतन्मानं च—वत्तीसं धणुहाइं चेइयरूक्खो उ वद्धमाणस्स । सेसाणं तु जिणाणं रासरीरा वारसगुणाओ ॥१॥ कुसुमवृष्टिः सुरकरविमुक्ताधःस्थितवृन्तजानुदघ्नपञ्चवर्णसुगन्धिपुष्पवर्षं, दिव्यध्वनिः सुरनरतिर्यग्जन्तुजातस्वस्वभापापरिणामरमणीयः, सङ्ख्यातीतपरिपत्प्राणियुगपदनेकसंशयापहारचतुरः, क्षीरेक्षुद्राक्षाद्यधिकतरमाधुर्यवानायोजनगामी देशनानिनादः । चामरे त्रिभुवनैश्वर्यसंसूचके शरच्चन्द्रमरीचिनिचयगौरे प्रकीर्णके । आसनममेयमहिमाविर्भावकं, समुच्छलत्पञ्चवर्णमणिकिरणकदम्बकर्बुरितदिगन्तरं सिंहासनम् । भावालयं निर्जितमार्तण्डमण्डलं मौलिपृष्ठप्रतिष्ठितं प्रभाजालम् । भेरी पुरतो व्योम्नि शब्दायमानः प्रतिरवभरितभुवनोदरो दुन्दुभिः । छत्रम् एकदेशे समुदायोपचाराज्जगत्त्रयैकप्रभुत्वाविर्भावनचतुरं पार्वणचन्द्रमण्डलनिभातपत्रत्रयम् । इह कंकेल्लिरित्यत्र प्राकृतवशाद्विभक्तिलोपो, भावलयभेरीछत्रमित्यत्र समाहारद्वन्द्वः, शेषं सुगमम् । समस्तासमस्तनिर्देशश्च वन्धानुलोम्यादेवमन्यत्रापि यथासम्भवमूह्यम्, अतिशयान्तर्गतत्वेऽपि चामीषां पृथगुपादानं प्रातिहार्येऽपि व्यपदेशान्तरेणागमे रूढत्वादिति गाथार्थः ॥ ८ ॥ अधुना

सार्धगाथया दोषानभिधाय तदपगमेन भगवन्तं गाथादलेन नमस्कुरुते—

॥ मूलम् ॥—अन्नाणकोहमयमाणलोहमायारई य अरई य ।
निद्दासोयअलियवयणचोरियामच्छरभयाइं ॥ ९ ॥
पाणिवहपेमकीडा पसंगहासा य जस्स इइ दोसा ।
अट्ठारसवि पणट्ठा नमामि देवाहिदेवं तं ॥ १० ॥

व्याख्या—यथास्थितवस्तुग्राहि ज्ञानं, ततोऽन्यदज्ञानं संशयविपर्ययादिकम् । तत्र किमयं स्थाणुः पुरुषो वेति संशयः, शुक्तिशकले रजतबुद्धिर्विपर्ययः १, क्रोधः प्रतीतः २, मदः कुलबलैश्वर्याद्युपाधिरहङ्कारः ३, मानो दुरभिनिवेशः ४, लोभो गार्ध्यम्, परिग्रहश्च गृद्धिस्वभावत्वादत्रैवान्तर्भवति ५, माया शाठ्यं ६, रतिरिष्टशब्दादिविषयप्राप्तौ मनः प्रवृत्तिः ७, तद्विपरीता त्वरतिः ८, निद्रा स्वापः ९, शोक इष्टवस्तुविरहसमुद्भवश्चित्तसन्तापः १०, अलीकवचनं भूतनिह्नवासद्भूतोद्भावनविपरीतभाषणनिन्दाभेदाच्चतुर्धा. तत्र भूतनिह्नवो नास्त्यात्मेत्यादि, असद्भूतोद्भावनं सर्वव्यापी श्यामाकतण्डुलमात्रो वेति, विपरीतभाषणं गामश्वं वदतः, निन्दावचनं चौरस्त्वमित्यादि ११, चौर्यं परस्वापहारः १२, मत्सरः परगुणासहिष्णुता द्वेष इति यावत् १३, भयं सप्तविधं, तद्यथा—इहलोकभयं यन्मनुष्यो मनुष्याद् बिभेति १, परलोकभयं यन्मनुष्यः सिंहादेः २, आदानभयमादीयते स्वीक्रियत इत्यादानं द्रव्यं, ततो मा ममैतच्चौरादयोऽपहरेयुरित्येवंरूपम् ३, अकस्माद्भयं बाह्यनिमित्तमन्तरेण यदन्धकारादावुत्पद्यते ४, आजीविकाभयमाजीविका वृत्तिस्ततो

भयम्, कथमहं दुर्भिक्षादौ वर्तिष्ये इति ५, मरणभयं प्रतीतम् ६, अश्लोकभयं यद्यहमिदमकार्यमाचरिष्यामि तदा ममाप्रसिद्धिर्भविष्यतीत्येवंरूपम् ७––१४, तथा प्राणिवधः, प्राणिनो जीवास्तेषां मनोवाक्कायैरतियातनम् १५, प्रेम स्नेहो राग इति यावत् १६, क्रीडाप्रसंगो मैथुनम् १७, हासो विस्मयादिषु वक्त्रविकासात्मकः १८, चः समुच्चये ।

इह च यद्यपि मत्सरः क्रोधमानात्मकः, प्रेम च मायालोभरूपं, तथापि तयोः पृथगुपादानं कथञ्चित्सामान्यस्य विशेषेभ्योऽन्यत्वख्यापनार्थम् । तथेहाज्ञानेन ज्ञानावरणदर्शनमोहनीययोरपगमः सूचितः । निद्रया तु दर्शनावरणस्य, क्रोधादिभिः कषायमोहस्य, रत्यादिभिर्नोकषायमोहस्य, प्राणिवधालीकचौर्यक्रीडाप्रसङ्गलोभैश्चारित्रमोहस्य, अमीषां चापगमेऽन्तरायस्याप्यवश्यमपगमोऽवगन्तव्यः । तस्य ज्ञानदर्शनावरणाभ्यामेकसमयेन सह क्षपणीयत्वात् । तदियता घातिकर्मणामभाव इति तात्पर्यम् । तथा चान्यैरपीत्थमेवोच्यते' यथा––अन्तरायदानलाभवीर्यभोगोपभोगकाः । हासो रत्यरती भीतिर्जुगुप्सा शोक एव च ॥ १ ॥ कामो मिथ्यात्वमज्ञानं निद्रा चाविरतिस्तथा ॥ रागो द्वेषश्च नो दोषास्तेषामष्टादशाप्यमी ॥ २ ॥ इति ।

इत्युल्लेखेन यस्याष्टादशापि दोषाः प्रणष्टा प्रलयं गताः, नमामि नमस्करोमि देवाधिदेवं तं, दीव्यन्ति वचनगोचरातिक्रान्तवैभवातिशयेन क्रीडन्तीति देवा भवनपत्यादयस्तेष्वाधिक्येन परमानन्दवीर्यज्ञानावाप्त्या दीव्यति द्योतते शोभते इति देवाधिदेवस्तमिति । इह च गुणोत्कर्षं दोषाभावं च प्रतिपादयन् ये प्राकृतपुरुषनिर्विशेषाः प्रबलाज्ञानतिमिरान्तरिततत्त्वदृष्टयः कोपप्रसादविडम्बितजगज्जना अनिरुद्धाश्रवद्वारा इष्टानिष्टविषयप्राप्तिनिबन्धनहर्षविषादाकुलितचेतसश्चक्रचा-

शश्वदङ्गनाङ्गपरिष्वङ्गरङ्गभाजो हास्यलास्य-पशूलगदादिशस्त्रविहस्तहस्तनिष्कारणजगज्जन्मस्थेमविरामविहितबालकेलयः सन्मार्गस्खलनोपजातजगद्विश्रुतवाच्यताविशेषास्ते गीतादिव्यसनावेदितनीचवृत्तयः पशुपक्षिमेषादिवाहनाध्यासीनवपुषः देवा न भवन्तीत्यावेदयतीति गाथार्थः॥१०॥ एवमवधारितस्वरूपो देवः पुनः किमभिधान इति जिज्ञासायां तन्नामधेयान्याह—

॥ मूलम् ॥—तस्स पुणो णामाइ निण्णि जहत्थाइं समयभणियाइं ।
अरिहंतो अरहंतो अरुहंतो भावणीयाइं ॥ ११ ॥

व्याख्या—तस्य पुनर्वर्णितस्वरूपस्य भगवतो यथार्थानि, न पुनर्मण्डपादिवन्निरन्वयानि, समयभणितानि सूत्रोक्तानि त्रीणि नामानि भावनीयानि । केनोल्लेखेन ? अरिहंता अर्हन् अरुहन्निति, इतिशब्दस्याध्याहारः, इति गाथार्थः ॥ ११ ॥

अथ यथार्थत्वमेव व्याचष्टे—

॥ मूलम् ॥—अट्ठविहंपि य कम्मं अरिभूयं होइ सव्वजीवाणं ।
तं कम्ममरिंहंता अरिहंता तेण वुच्चंति ॥ १२ ॥

व्याख्या—अष्टविधमपि ज्ञानावरणादिभेदतोऽष्टप्रकारमप्यपिशब्दादुत्तरप्रकृत्यपेक्षया अनेकप्रकारमपि, चशब्दोऽवधारणे भिन्नक्रमस्ततश्चाष्टविधं कर्मैवारिभूतं शत्रुभूतं भवति, सर्वजीवानर्थहेतुत्वादिति भावः । तत्कर्मारिं हन्तारो, यतो घ्नन्तीत्येवं साधवो हन्तारस्तु निकृते पश्चाद् द्वितीयासमासोऽरिहंतारस्तेनोच्यन्त इति ॥ १२ ॥

॥ मूलम् ॥—अरहंति वंदणणमंसणाइं अरहंति पूयसक्कारं ।
सिद्धिगमणं च अरहा अरहंता तेण वुच्चंति ॥ १३ ॥

व्याख्या---अर्हन्ति वन्दननमस्करणे, तत्र वन्दन शिरसा, नमस्करणं वाचा, तथा अर्हन्ति पूजासत्कारमत्र द्वन्द्वैकवद्भावः । तत्र पूजा वस्त्रमाल्यादिजन्या, सत्कारोऽभ्युत्थानादिसम्भ्रमः, सिद्ध्यन्ति निष्ठितार्था भवन्त्यस्मां प्राणिन इति सिद्धिर्लोकान्तक्षेत्रलक्षणा । तथा च भगवद्भद्रबाहुस्वामिपादाः---'इह बुंदिं चइत्ताणं तत्थ गंतूण सिज्झइ ।' तत्गमनं च प्रतीति शेषोऽर्हा योग्याः, प्राकृतशैलया अर्हन्तीत्यर्हाः, यद्वा अर्हन्तीत्यर्हन्तस्तेनोच्यन्ते असकृत्क्रियोपादानं चातिशयख्यापनार्थम् । दृश्यते चायं न्यायो, यथा---जयइ सुयाणं पभवो तित्थयराणं अपच्छिमो जयइ । जयइ गुरु लोगाणं जयइ महप्पा महावीरो ॥ १३ ॥ तथा —

॥ मूलम् ॥---अच्चंतं दड्ढंमि बीयंमि न अंकुरो जहा होइ ।
दड्ढंमि कम्मबीए न रुहइ भवअंकुरोवि तहा ॥ १४ ॥

व्याख्या-अत्यन्तं सर्वात्मना दग्धे बीजे यथाङ्कुरो न भवति, तथा शुक्लध्यानानलेन दग्धे कर्मबीजे न रोहति भवाङ्कुरः । अयमभिप्रायः---दग्धकर्मबीजत्वान्न रोहन्तीत्यरोहन्त इति गाथार्थः ॥ १४ ॥ सम्प्रत्यस्यैव भगवतः सर्वथाराध्यत्वोपदेशमाह---

॥ मूलम् ॥---तं नमह तं पसंसह त झायह तस्स सरणमल्लियह ।
मा किणह कणयमुल्लेण पित्तलं इत्तियं भणिमो ॥ १५ ॥

व्याख्या---तं देवं नमत शिरसा, तं प्रशंसत वचसा, तं ध्यायत पिण्डस्थरूपस्थरूपातीतरूपतया मनसा, तस्येति

सुपां सुपो भवन्तीति न्यायात् षष्ठ्याः स्थाने द्वितीया, ततश्च तं शृणोत्याश्रितजनस्य विघ्नव्रातमिति शरणं त्रातारं, भावसाधनो वा शरणशब्द स्तदा तु तस्येति कर्तरि षष्ठयेव, आलीयध्वमाश्रयध्वं, तस्यैव कर्मशत्रुसंत्रस्तजगत्परित्राणैकव्यापृतत्वाद्, असकृत्तच्छब्दोपादानं तत्रैव देवत्वबुद्धिर्विधेयेत्यादरख्यापनार्थम्। किमित्येवमित्याह––मा क्रीणीत, मा विनिमयध्वं, मा गृह्णीतेति यावत्, कनकमूल्येन स्वर्णपण्येन पित्तलं प्रतीतमेतावद्भणामः। अयमभिप्रायो––वस्तूनां नामवर्णादिसाम्येऽपि महदन्तरमिति न तत्र भ्रान्तितः कनकमूल्यतुल्यनमनप्रशंसनध्यानादिभिः पित्तलतुल्यसरागदेवानाराधयतेत्युपदेशसर्वस्वम्। तथा च––अकसुरहीण छीरं कक्कररयणाइं पच्छयरा दोवि। एरंडकप्परुक्खा तरुणो पुण अंतरं गरुयं ॥ १ ॥ पंथसरिसा कुपंथा कूडकणगसरिसं न य सुवण्णं। धम्मसरिसो अहम्मो कायव्वो नेत्थ मयमोहो ॥ २ ॥ इति गाथार्थः ॥ १५ ॥ अन्यदपि तं प्रति भक्तिकृत्यमाह––

**॥ मूलम् ॥––मेरुव्व समुत्तुंगं हिमगिरिधवलं लसंतधवलधयं।**

**भवणं कारेयव्वं विहिणा सिरिवीयरायस्स ॥ १६ ॥**

व्याख्या––सुगमा, नवरमिदमुत्कर्षाभिधानं समृद्ध्यपेक्षं धनरहितस्य तु यादृश तादृशमपि भक्त्या कुर्वतः पुण्यमेव। यदुक्तं––यस्तृणमयीमपि कुटीं कुर्याद्दद्यात्तथैकपुष्पमपि। भक्त्या परमगुरुभ्यः पुण्योन्मानं कुतस्तस्य ॥ १ ॥ हिमगिरिधवलमिति शेषवर्णोपलक्षणं च, ईक्ष्यते च 'सव्वरयणमएहिं' इत्यादि। धवलध्वजप्रतिपादनं तु वर्णान्तरयुक्तपताकानिरासार्थमिति ॥ १६ ॥ विधिनेत्युक्तमतो विधिमेवाह––

॥ मूलम् ॥––जिणभवणकरणविहि सुद्धा भूमी दलं च कठाइं ।
भयगाणतिसंधाणं सासयवुड्ढी य जयणा य ॥ १७ ॥

व्याख्या––जिनभवनकरणविधिरयं भवतीति शेषः, तथाहि––शुद्धा निर्दोषाभूमिर्वसुधा, सा च द्रव्यतो भावतश्च, तत्र द्रव्यतः, शिष्टजनोचितप्रदेशस्थाऽशिवकाङ्गारास्थ्यादिशल्यरहिता च । भावतस्तु सकारणाप्रीतिकरणरहिता, अत्र दोषा हि दुष्टजनोपघातात्प्रतिदिनं वृद्धेरसम्भवः, साधूनां च चैत्यवन्दनार्थमनागमनम्, आगमने तु वेश्यापिङ्गादीनां चेष्टादर्शनवचनश्रवणादिभिश्चित्तविप्लुतेर्धर्मभ्रंशः शासननिन्दा च भवति, यथैवंविधा एवैते यन्मद्यापणवेश्यापाटकद्यूतखेलकमत्स्यबन्धपाटकादिषु जिनायतनानि विधापयन्ति ॥

कलहश्च तैः सह सम्पद्यते, ततश्चात्मनस्तेषां च दारुणः कर्मबन्ध इति । शिवकादियुक्तायां पुनरनिवृत्त्यर्थहान्यनर्थोपत्तिकार्यासिद्ध्यनुदयादयो बहवो दोषाः पराप्रीतियुक्ता वाऽधर्महेतुत्वेन धर्मार्थिना दूरतस्त्याज्याः, यदाह––
धम्मत्थमुज्जयणं सव्वस्साद्विपत्तियं न कायव्वं । इय संजमोविसेओ इत्थ य भयवं उदाहरणं ॥१॥ तथा दलं चोपादानकारणं, किंभूतं ? काष्ठादि दारुपाषाणेष्टकाप्रभृति शुद्धमिति प्रक्रमः। तच्च यद्देवतोपवनतद्भवनादेर्नानीतं, तदानयने हि जिनभवनस्यानेतुर्वा सा प्रद्विष्यते । तथा स्वयं चेष्टकापचनवृक्षच्छेदादिभिर्यन्न कारितं, द्विपदचतुष्पदोपघातलक्षणविधिना च यन्नानीत, तथाहि––दलमिष्टकादि तदपि च शुद्धं तत्कारिवर्गतः क्रीतं । उचितक्रयेण तत्स्यादानीतं चैव विधिना तु ॥१॥
तथा भृतकानां सूत्रकारप्रभृतीनां तद्वेतनापेक्षमनतिसन्धानमवञ्चकमपि च तत्तेषां दातव्यं । एवं हि ते हृष्टा सन्तः सविशेषं

कर्मसूद्यमं कुर्वन्ति, जिनधर्मबहुमानाच्च बोधिबीजादि प्राप्नुवन्ति, तथा स्वाशयस्य शोभनाध्यवसायस्य स्वकीयाध्यवसायस्य वा वृद्धिर्वर्धनं स्वाशयवृद्धिः सा च, यथा—पिच्छिस्सं इत्थ अहं वंदणगनिमित्तमागए साहू । कयपुन्ने भगवंते गुणरयणनिही महासत्ते ॥१॥ तथा—पडिबुज्झिस्संति इह दट्ठूण जिणिंदबिंबमकलंकं । अन्नेवि भव्वसत्ता कोहिंति तओ परं धम्मं ॥२॥ ता एयं मे वित्तं जमित्थमुवउगमेइ अणवायं । इय चिंतापरिवडिया सासयवुड्ढीकरा णेया ॥३॥ तथा यतना च गुरुदोषत्यागेनेतरदोषाश्रयेण, सा च शुद्धदलग्रहणजलगालनादिरूपा, तस्या एव सर्वक्रियासु प्राधान्यात्, यदाह—जयणा य पयत्तेणं कायव्वा पसत्थसव्वजोगेसु । जयणा उ धम्मसारा जं भणियं वीयरायेहिं ॥१॥ जयणा उ धम्मजणणी जयणा धम्मस्स पालणी चेव । तव्वुड्ढिकरी जयणा एगंतसुहावहा जयणा ॥२॥ इति इह भूम्यादीनि जिनभवनविधेरङ्गानीत्यङ्गाङ्गिनोरभेदोपचाराज्जिनभवनविधिः शुद्धा भूमिरित्यादि सामानाधिकरण्येनोक्तमिति गाथार्थः ॥१९॥ उक्तो जिनभवनकरणविधिः । तथैतत्केन कारयितव्यमित्याह—

॥ मूलम् ॥—अहिगारिणा इमं खलु कारेयव्वं विवज्जए दोसो ।
आणाभङ्गा उच्चिय धम्मो आणाए पडिबद्धो ॥ १८ ॥

व्याख्या—अधिकारिणैव वक्ष्यमाणस्वरूपेण इदं जिनवेश्म, खलुरेवकारार्थो योजित एव, कारयितव्यं, विपर्ययेऽनधिकारिणि कारयितरि, दूष्यते—अशुभकर्मोपादानेन विकृतिं नीयतेऽनेनात्मेति दोषो दूषणं, कस्मादित्याह—आज्ञाभङ्गादेव, आङिति स्वस्वभावावस्थानात्मिकया मर्यादया अभिव्याप्त्या वा ज्ञायन्तेऽर्था अनयेत्याज्ञा भगवदभि-

हितागमस्तस्या भङ्ग इव भङ्गोऽन्यथाकरणात्तस्मात् । अथ कथमाज्ञाभङ्गस्य दोषहेतुत्वमित्याह--धर्म आज्ञयाप्रतिबद्धो व्याप्तस्तदविनाभावित्वात्, ततश्च यद्यदविनाभूतं न तत्तद्विना भवति, यथाग्निना धूमस्तथा, आज्ञाऽविनाभूतश्च धर्म इति गाथार्थः ॥१०॥ एतदेव सविशेषमाह--

॥ मूलम् ॥--तित्थगराणा मूलं नियमाधम्मस्स तीए वाघाए ।
किं धम्मो किमहम्मो मूढा नेयं वियारंति ॥ १९ ॥

व्याख्या--तीर्थकरः शास्ता तस्याज्ञा वर्णितस्वरूपा मूलं मूलकारणं नियमान्निश्चयतो धर्मस्य यतिश्रावकभेदभिन्नस्य, तस्या आज्ञाया व्याघाते व्यतिक्रमे किं धर्मः किमधर्म इति काकुप्रयोगादधर्म एव भवतीत्याकूतम् । मूढाः प्रबलमोहोपहतविवेकदृष्टयो नेद विचारयन्ति विवेचयन्तीति गाथार्थः ॥१९॥ पर्यवसितमेवार्थमाह--

॥ मूलम् ॥--आराहणाए तीए पुन्नं पावं विराहणाए उ ।
एयं धम्मरहस्सं विन्नेयं वुद्धिमंतेहिं ॥ २० ॥

व्याख्या--आराधनया श्रद्धानानुष्ठानरूपसेवया तस्या आज्ञायाः किं ? पुण्यं, विराधनया आराधनाविपरीतया पुनः पापं दुष्कृतं जायत इति शेषः । आज्ञाया एव धर्मनिमित्ततां प्रति पुरस्करणायाह--एतदनन्तरोक्तमाज्ञाराधनाविराधनारूपं विधिनिषेधद्वारेण धर्मरहस्यं कुशलकर्मगुह्यं विज्ञेयं ज्ञातव्यं बुद्धिमद्भिः यतः--पारलौकिकेषु विधिष्वज्ञाते एव प्रवृत्तिनिवृत्ती भवतः, प्रत्यक्षादीनां तत्राप्रवृत्तेरनाप्तवचनस्य च व्यभिचारित्वादिति गाथार्थः ॥२०॥ सम्प्रति प्रस्तुतमधि-

कारिणमाह--

॥ मूलम् ॥--अहिगारिओ गिहत्थो सुहसयणोवित्तसंजुओ कुलजो ।
अक्खुद्दो धिइबलिओ मइमं तह धम्मरागी य ॥ २१ ॥

व्याख्या--अधिकारी तु योग्यः पुनर्जिनभवनविधौ गृहस्थोऽगारी, न तु साधुः, विशेषप्रतिज्ञारूढत्वात्तस्य, यदुक्तं-अकसिणपवत्तगाणं विरयाविरयाण एस खलु जुत्तो । संसारपयणुकरणो दव्वथए कूवदिट्ठंतो ॥१॥ सोऽपि नाविशिष्ट इत्यत आह--शुभस्वजनोऽसङ्क्लिष्टबान्धवः, अशुभस्वजनो हि स्वजनानां लोकधर्मविरुद्धचारित्वेन न शुभभाववृद्धिमवाप्नोति, न च प्रवचनप्रभावयितुमलमेतद् द्वयार्थमेव हि जिनभवनारम्भो विवेकिनाम् । सोऽपि वित्तसंयुतो द्रव्यपतिर-निद्रशस्य हि तदारब्धमपि न सिद्ध्यति, तदसिद्धौ च स खेदभाजनं भवति, पराभ्यर्थनाद्वारेण तत्साधयन्नपि जनहास्यो भवति, अहो जिनभवनकरणव्याजेनायं कुटुम्बं पुष्णातीति सम्भावनाहेतुत्वात् सोऽपि कुलजः प्रशस्यकुलजातोऽनिन्द्यकुल जातो वा, अन्यथाविधेन हि विहितं तन्नात्यन्तं लोकादेयं स्यात् । सोऽप्यक्षुद्रोऽकृपणः, कृपणो ह्यौचित्येन द्रव्यव्ययकरणाशक्तत्वान्न तत्साधनाय शासनप्रभावनाय वालम् , अथवाऽक्षुद्रोऽक्रूरः, क्रूरेण हि परोपतापित्वाज्जनद्वेष्येण कृतं तदायतनं तन्मत्सरेण जनद्वेष्यं स्यात् । सोऽपि धृतिबलिकः, धृतिर्मनः समाधानं तदेव बलं सामर्थ्यं तदस्यास्तीति धृतिबली धृतिबलहीनो हि द्रव्यव्यये पश्चात्तापान्न पुण्यभाजनं भवति । सोऽपि मतिमान् बुद्धियुक्तो. मतिविहीनो ह्यनुपायप्रवृत्तेर्न दृष्टादृष्टफलभाग्भवति तथेति समुच्चये, सोऽपि धर्मरागी श्रुतचारित्रधर्मानुरक्तो, धर्माननुरागी हि उक्तगुणकलापोपेतोऽपि न

जिनभवनविधाने प्रवर्त्तते; प्रवृत्तावपि नाभिप्रेतफलसिद्धिभागिति नासावधिकारी । चकारो गुरुपूजाकरणरत्यादिगुणसंग्राहकस्तथाहि-गुरुपूजाकरणरई सुस्सूसाइ गुणसंगओ चेव । नायाहिगयविहाणस्स धणियमाणापहाणो य ॥ १ ॥ इति गाथार्थः ॥ २१ ॥ अधिकारिणा निर्मापिते जिनवेश्मनि यद्विधेयं तदाह——

॥ मूलम् ॥——निप्पाइऊण एयं जिणभवणं सुंदरं तहिं बिंबं ।
विहिकारियमह विहिणा पइट्ठविज्जा लहुं चेव ॥ २२ ॥

व्याख्या-निष्पाद्य निर्माप्यैवमुक्तनीत्या जिनभवनं, ततः सुन्दरं मनोनयनानन्ददायि तत्र जिनभवने बिम्बं मृदुपलपित्तलरूप्यस्वर्णरत्नादिमयीं प्रतिमां प्रक्रमाज्जिनस्यैव विधिकारितं शास्त्रनीतिविधापितम् , विधिश्च यथा——जिणबिंबकारणविहि काले संपूइउण कत्तारं । विहवुचियमूलप्पण——मणहस्स सुहेण भावेण ॥ १ ॥ अस्या लेशतो व्याख्या-काले तदुचितावसरे सम्पूज्य सन्मानयित्वा कर्तारं सूत्राधारं विभवोचितमूल्यं स्वसमृद्ध्यनुरूपवेतनमनघस्यानौचित्येन द्रव्याग्राहकत्वेन लोभादिदोषरहितस्य शुभेन भावेनोदारतया प्रवर्धमानप्रशस्ताध्यवसायेनेति । तारिसयस्साभावे तस्सेव हियत्थमुज्जओ नवरं । नियमेइ बिंबमुल्लं जं उचियं कालमासज्ज ॥ १ ॥ तादृशस्येत्यनघस्य तस्यैव हितार्थमुद्यतो मा बिम्बार्थकल्पितद्रव्यभक्षणतः संसारगर्ते न्यपतदसाविति नियमयति बिम्बमूल्यं, यथेयता द्रव्येणेयद्बिम्बं विधातव्यं भवतेति, कालमासाद्येति क्वचिदपि काले कियदपि बिम्बमूल्यं स्यादिति ।

अथानन्तरं विधिना सूत्रोक्तनीत्या प्रतीतिस्थाप्यानुरूपतया तिष्ठत्यास्ते बिम्बं, ततस्तदधिकारी प्रतिष्ठापयेल्लघु

शीघ्रं, चेव इवार्थे इति वचनाच्चेवेत्यवधारणे, यदुक्तं निष्पन्नस्यैवं खलु जिनबिम्बोदिता प्रतिष्ठा तु दशदिवसाभ्यन्तरत इति। प्रतिष्ठाविधिश्च सङ्क्षेपत आह--निप्फन्नस्स य सम्मंतस्स पइट्ठावणेविही एसो। सठाणे सुहजोगे अहिवासणमुचियपूयाए॥ १॥ व्याख्या--स्वस्थाने तत्र तद्भविष्यति, शुभयोगे प्रशस्तचन्द्रनक्षत्रलग्नादिसम्बन्धे, अधिवासनं प्रतिष्ठाकल्पप्रसिद्ध मुचितपूजया विभवानुसारत इति, ततश्च--चेइवंदणथुइवुड्ढी--उस्सग्गो साहु सासणसुराए। थयसरणपूयकाले। ठवणामंगलगपुव्वा उ ॥ १॥ व्याख्या--चैत्यवंदना विधेया स्तुतिवृद्धिः प्रवर्धमानस्तुतिपाठ इत्यर्थ, कायोत्सर्गः कार्यः, साधु असंमूढतया, कस्याः ? शासनसुरायाः प्रवचनदेवतायाः, तत्र स्तवस्मरणं चतुर्विंशतिस्तवानुचिन्तनं कार्यं, ततः पूजा जातिपुष्पादिना जिनबिम्बस्य, ततः काले प्रतिष्ठालग्नस्याभिमतांशे स्थापना प्रतिष्ठा मङ्गलपूर्वा तु पञ्चनमस्कारपूर्वैवेति। उक्तं च समुद्राचार्यप्रतिष्ठाकल्पे-पज्जत्तमिमेणं चिय मायालोभेहिं विप्पमुक्कस्स। पंचनमुक्कारेणं असेसपावोहमलणेणं ॥ १॥ सव्वत्थभावमंगल--पंचनमुक्कारपुव्विया किरिया। कायव्वा जिणबिम्बाण सव्वभावेण य पइठा॥ २॥ विस्तरस्तु ग्रन्थान्तरादवसेय इति गाथार्थः॥ २॥ अथ जिनभवनस्यैव निर्मापणविधिविशेषकृतो भेदानाह—

॥ मूलम् ॥--अहिगारिणा विहीए कारवियं जं न साहुनिस्साए।
तमनिस्सकडं अट्ठा--वइव्व सेसं तु निस्सकडं ॥ २३ ॥

व्याख्या—अधिकारिणा वर्णितेन विधिना वर्णितेनैव, स्त्रिया निर्देशः प्राकृतत्वात्, कारितं विधापितं यन्न साधु-

निश्रया यत्याश्रयेण, यदुत विवक्षिताचार्यपदे प्रतिबद्धमिदमिति तदनिश्राकृतं जिनभवनमिति प्रकृतमत्र दृष्टान्तमाह— अष्टापद इव भरतचक्रवर्तिकारिताष्टापदगिरिशिखरवर्तिजिनभवनवत्, शेषं तूक्तविपर्ययविहितं निश्राकृतमिति गाथार्थः ॥ २३ ॥ अथ प्रस्तुतबिम्बस्थापनानन्तरं किं विधेयमित्याह--

॥ मूलम् ॥--कुसुमक्खयधूवेहिं दीवयवासेहिं सुंदरफलेहिं ।
पूया घयसलिलेहिं अट्ठविहा तस्स कायव्वा ॥ २४ ॥

व्याख्या-इह सुन्दरशब्दः फलशब्देन सह समस्तोऽपि पूजाप्रकारेषु शेषेष्वपि योज्योऽष्टौ विधाः प्रकारा यस्यां साष्टविधा पूजा, तस्य जिनबिम्बस्य कर्तव्येति सम्बन्धः, काभिः पुनस्ताभिरित्याह--कुसुमानि जलस्थलजानि मनोहरपुष्पाणि तैर्बिम्बाङ्गोपाङ्गेषु विचित्ररचनादि कार्यम् १, अक्षता अखण्डोज्ज्वलाः शालितण्डुलादयस्तैर्दर्पणाद्यष्टमङ्गललिखनम् २, धूपाः प्रचुरपरिमलोद्गारा अगुर्वादिरूपास्तदुत्क्षेपणम् ३, दीपास्तमःस्तोमैकप्रतीपास्तदुद्बोधनम् ४, वासाः सौरभ्यवासिताश्चन्दनचूर्णादयस्तैर्विच्छुरणम् ५, फलानि माधुर्यपेशलानि नारङ्गादीनि तड्ढौकनम् ६, घृतेत्युपलक्षणं सर्वसरससारनैवेद्योपहारः ७, सलिलानि मधुरनिर्मलानि तदुपनमनमिति ८, सर्वत्र व्यक्त्यपेक्षया बहुवचनमिह च राजप्रश्नीयोपाङ्गादिष्वधिका अपि प्रकाराः केचिदुपलभ्यन्ते, ते तु यथासंभवमेतेष्वेवान्तर्भावयितव्या इति गाथार्थः ॥२४॥ इह च केचित्कस्याश्चित्प्रतिमायाः पूजनमाहुरिति तन्मतमाह—

|| मूलम् ||—गुरुकारियाए केइ अन्ने सयकारियाए तं बिंति ।
विहिकारियाए अन्ने पडिमाए पूयणविहाणं ॥ २५ ॥

व्याख्या—गुरवो मातृपितृपितामहादयस्तैः कारितायाः, केचिदन्ये स्वयंकारितायाः विधिकारिताया स्त्वन्ये प्रतिमायास्तत्पूर्वाभिहितं पूजाविधानं ब्रुवन्ति, कर्तव्यमिति शेषः। अत्रस्थितपक्षस्तु गुर्वादिकृतत्वस्यानुपयोगित्वान्ममत्वाग्रहरहितेन सर्वप्रतिमा अविशेषेण पूजनीयाः, सर्वत्र तीर्थकृदाकारोपलम्भेन तद्बुद्धेदुद्वेरुपजायमानत्वाद्, अन्यथा हि स्वग्रहवशादर्हद्बिम्बेष्वप्यवज्ञामाचरतो दुरन्तसंसारपरिभ्रमणलक्षणो बलाद्दम्भः समाढौकते । न चेवमविधिकृतामपि पूजयतस्तदनुमतिद्वारेणाज्ञाभङ्गलक्षणदोषापत्तिरागमप्रामाण्यात् तथाहि—निस्सकडमनिस्सकडे वावि चेईए सव्वहिं थुई । तिन्निवेलं व चे—इयाणि वणाउं एक्केक्किया वावि ॥ १ ॥ इति गाथार्थः ॥ २५ ॥ अथ पूजागतमेवोपदेशशेषमाह—

|| मूलम् ||—सुत्तभणिएण विहिणा गिहिणा णिव्वाणमिच्छमाणेण ।
लोगुत्तमाण पूया निच्चं चिय होइ कायव्वा ॥ २६ ॥

व्याख्या—चियेत्येवार्थे, यथा सूत्रभणितेनैव विधिना, यतः—समइपवित्तसव्वा आणबज्झत्ति भवफला चेव । तित्थयरुदेसेण वि न तओ सा तदुदेसा ॥ २ ॥ विधिश्च—काले सुइभूएणं विसिट्ठपुप्फाइएहिं विहिणा उ । सारथुइथोत्तगरुई जिणपूया होइ विन्नेया ॥ १ ॥ गृहिणैव न त्वनगारेण, तस्यानधिकारित्वाद्, एतेनाधिकारी प्रत्यपादि, निर्वाणमेवेच्छता, यतः—'नरविबुहेसरसोक्खं' इत्यादि, किंचार्थान्तरस्यान्यथापि प्राप्यत्वात्, लोकः सामान्येन भव्यसत्व-

लोकः सजातीयोत्कर्ष एवोत्तमत्वोपपत्तेस्तस्य सकलकल्याणैकनिबन्धनतया भव्यत्वभावेनोत्तमा अर्हन्तस्तेषां पूजा नित्यमेव भवति कर्तव्येति गाथार्थः ॥ २६ ॥ विधिनेत्युक्तमथ विधिमेव पुरस्कुर्वन्नाह—

॥ मूलम् ॥—आसन्नसिद्धियाणं विहिपरिणामो उ होइ सयाकालं ।
विहिचाओ अविहिभत्ती अभव्वजियदूरभव्वाणं ॥ २७ ॥

व्याख्या—आसन्ना स्वल्पकालप्राप्यतया समीपवर्त्तिनी सिद्धिर्मुक्तिर्येषां ते तथा तेषामेव विधिः समयभाषया सर्वक्रियासु सूत्रोक्तो न्यायस्तस्य परिणामो रुचिः । तुरेवार्थो योजित एव भवति । सदाकालमिति लोकरूढ्या सर्वकालार्थे विधित्यागोऽविधिभक्तिश्चाविधिसेवा, जीवशब्दस्यान्ते सम्बन्धादभव्यदूरभव्यजीवानां भवतीत्यत्रापि योगः । तत्राभव्या मुक्तिगमनायोग्या, दूरे उपार्धपुद्गलपरावर्तात्परतो भव्यत्वं येषां ते दूरभव्या इति गाथार्थः ॥ २७ ॥ तथा

॥ मूलम् ॥—धन्नाणं विहिजोगो विहिपक्खाराहगा सया धन्ना ।
विहिबहुमाणि धन्ना विहिपक्खअदुसगा धन्ना ॥२८॥

व्याख्या—धनमर्हन्तीतिधन्यास्तेषां विधियोगस्तदधिगमरूपः सम्बन्धः, विधिपक्षाराधका विधिमार्गानुष्ठायिनः सदा धन्या एव, तेषां हि शिवसुखसाधने मुख्यवृत्त्यैव प्रवृत्तत्वात् तथा विधिबहुमानिनोऽपि धन्यास्ते हि यद्यप्यत्यन्तविपयासक्ततयाऽज्ञानितया वा तदनुष्ठाने न प्रवर्तन्ते, तथापि तदनुष्टातॄन् प्रति बहुमानतो मार्गानुपातिनः यदाह—
जच्चियगुणपडिवत्ती सव्वन्नुमयम्मि जायइ विसुद्धा । तच्चिय जायइ बीयं बोहीए तेण णाएणं ॥ १ ॥ तथा विधिपक्षाद्-

॥२३॥

पका अपि धन्याः । अप्रतिषिद्धमनुमतमिति न्यायेन किंचिदक्लिष्टाध्यवसायित्वेन तेषामपि मनागाराधकत्वाद्, उक्तं च— विहिअपओसो जेसिं आसन्ना ते विसुद्धिपत्तत्ति । खुद्दगिराणं पुण सुद्ध—देसणा सीहनायसमा ॥ १ ॥ इति गाथार्थः ॥ २९ ॥ अथ विधिपक्षमुपसंहरन् 'पूयाए उवरि वंदणं नेयं' इति वचनमनुवर्तमानो वन्दनोपदेशमाह—

॥ मूलम् ॥—इय आगमविहिपुव्वं भत्तिभरुल्लसियबहलरोमंचा ।

तं भुवणवंदणिज्झं वंदह परमाए भत्तीए ॥ २९ ॥

व्याख्या—इति हेतोरागमविधिपूर्वं भक्तिभरोल्लसितबहलरोमाञ्चा आन्तरप्रीत्यतिशयोद्गतबहलपुलकास्तं तीर्थकरं प्रस्तुतबिम्बं वा भुवनवन्दनीयं, वन्द्यत्वे हेतुरयं वन्दध्वं नमस्कुरुत भो भव्या इति शेषः परमया भक्त्या प्रकृष्टया कायप्रतिपत्त्या, अनेन बहुमानभक्तिविरहेण वन्दमानोऽपि द्रव्यवन्दनत्वेन न तथाविधनिर्जराभाग्भवतीत्यावेदयतीति गाथार्थः ॥ २९ ॥ वन्दनविधिमेवाह—

॥ मूलम् ॥—पंचविहाभिगमेणं पयाहिणतिगेण पूयपुव्वं च ।

पणिहाणमुद्दसहिया—विहिजुत्ता वंदणा होति ॥ ३० ॥

व्याख्या—पञ्चविधाभिगमेन प्रदक्षिणात्रिकेण, पूजार्चा पूर्वा प्रथमा यस्मिंस्तत्तथा क्रियाविशेषणमिदं, चः समुच्चये, प्रणिधानमुद्राभ्यां सहिता विधियुक्ता वन्दना भवति । इह च प्रदक्षिणाशब्दसम्बद्धमपि त्रिकपदं व्याख्यानात्पूजाप्रणिधान-मुद्रास्वपि योज्यम्, एतावता च शेषत्रिकषट्कमपि सूचितम्, वक्ष्यति च 'तिन्नि निस्सीहिए' इत्यादीति गाथार्थः ॥३०॥

॥ ३० ॥ पञ्चविधाभिगममेवाह—

॥ मूलम् ॥—दव्वाण सचित्ताणं विउस्सरणमचित्तदव्वमणुसग्गो ।
मणएगत्तीकरणं अंजलिबंधो य दिट्ठिपहे ॥ ३१ ॥
तह एगसाडएणं उत्तरसंगेणं जिणहरपवेसो ।
पंचविहोभिगमो इय अहवावि य अन्नहा एस ॥ ३२ ॥

व्याख्या—द्रव्याणां वस्तूनां सचित्तानां पुष्पताम्बुलादीनां व्युत्सर्जनं परित्याग, एतत्पुनः पूजोपकरणं विमुच्येति ज्ञेयम् , तथा अचित्तद्रव्याणां कटककेयूरादीनामनुत्सर्गोऽपरिहारः । मकारोऽत्र प्राकृतप्रभवः ।

तथा एकस्मिन् वस्तुनि अवस्थिततत्परिणामात्मनाप्येकं, तस्य भावस्तत्त्वं, ततो नानावस्तुसञ्चारित्वेन अनेकत्वस्य सत एकत्वस्य करणमेकत्वीकरणं मनस एकत्वीकरणमिति समासः । अन्तःकरणावलम्बताविधानमित्यर्थः । तथा अञ्जलिबन्धः शिरसि करकुड्मलन्यासो दृष्टिपथे लोचनगोचरेऽवतीर्णे भगवतीति शेषः । चः समुच्चये, तथा एकः साटको यत्रासावेकसाटकस्तेन, अनेनानेकवस्त्रनिषेधमाह, उत्तरस्मिन्नुपरितने काये आसङ्गो वस्त्रविन्यासविशेषलक्षणः सम्बन्धस्तेन जिनगृहे प्रवेशोऽर्हन्मन्दिरान्तर्गमनम् , एतच्चार्थवशात्सप्तम्यन्तम् कृत्वा प्राक्तनेष्वपि चतुर्षु योजनीयम् । इह च 'एगसाडएण उत्तरासंगेणंति' पदं पुरुषस्यैव, स्त्रियास्तु 'विणउणयाएगायलद्धीए' इति पञ्चममभिगमपदं दृश्यम्, व्यक्तश्चैतत् पञ्चविधोऽभि आभिमुख्येन प्रस्तावाज्जिनस्य गम्यते अनेनेत्यभिगम इति पूर्वदर्शितप्रकारेण भवतीति शेषः । अपि चेत्यभ्युच्चयेऽथवा



॥ २५ ॥

अन्यथा विशिष्टपुरुषापेक्षया एषोऽभिगम इति गाथाद्वयार्थः ॥ ३१ ॥ ॥ ३२ ॥ तमेवाह—

॥ मूलम् ॥—अवहट्टु रायककुहाइं पच वररायककुहरूवाइं ।
खग्गं छत्तोवाणह—मउड तह चामराउ य ॥ ३३ ॥

व्याख्या—अपहृत्य मुक्त्वा राजककुदानि नृपचिह्नानि, कति ? पञ्च किं सामान्यनृपचिह्नानि ? नेत्याह—वरराजककुदरूपाणि, तान्येवाह—खङ्गं कृपाणं, छत्रोपानन्मुकुटमिति द्वन्द्वैकवद्भावः । तत्र छत्रमातपत्रम् , उपानहौ पादुके, मुकुटचामरे च प्रतीते । स्त्रीत्वमत्र प्राकृतवशाद् , राजादेर्जिनगृहप्रवेशे इत्युत्तरक्रियाप्रक्रमः । चकारः पूर्वाभिगमपरिग्रहार्थ इति गाथार्थः ॥३३॥ सम्प्रति पूर्वसूचितदशत्रिकाण्याह—

॥ मूलम् ॥—तिन्नि निसीहिय तिन्नि य पयाहिणा तिन्नि चेव य पणामा ।
तिविहा पूया य तहा अवत्थतियभावणं चेव ॥ ३४ ॥
तिदिसि निरिक्खणविरई तिविहं भूमिपमज्जणं चेव ।
वन्नाइतियं मुद्दा—तियं च तिविहं च पणिहाणं ॥ ३५ ॥

व्याख्या—सावद्यव्यापारनिषेधेन निर्वृत्ता नैषेधिक्यस्तास्तिस्रो द्वारे मध्ये गर्भगृहे च, प्रदक्षिणा दक्षिणहस्तादारभ्य प्रगतं यासु क्रियासु ताः प्रदक्षिणाः प्रतीतास्तिस्रः, चः समुच्चये, अत्र च सूत्रे क्वचिदनुपलम्भादिति प्रलपन्तः स्थापनार्हत्प्रदक्षिणां प्रति विप्रतिपद्यन्ते केचन, तच्चायुक्तं, साक्षादर्हति प्रतिपादितत्वेन तद्बिम्बेष्वपि तद्बुद्धिजनकेषु युज्य-

मानत्वात्, यदि चागमानभिहितत्वेन न विधीयेरंस्तदा चैत्याश्रयेण पञ्चविधाभिगमस्याप्यनभिहितत्वात्तस्यापि न विधेयतैव स्यात्। किं च जीवाभिगमसूत्रे विजयदेववक्तव्यतायां प्रतिमाप्रदक्षिणाया अपि साक्षादभिहितत्वात्। तथाहि—

तएणं से विजए देवे चउहिं सामाणियसाहस्सीहिं जाव अन्नेहिं य वाणमंतरेहिं देवेहिं देवीहिं य सद्धिं संपरिवुडे सव्वड्ढीए सव्वजुईए जाव निग्घोसनाइयरवेणं जेणेव सिद्धाययणे तेणेव उवागच्छइ, उवगच्छइत्ता सिद्धाययणं अणुप्पयाहिणी करेमाणे करेमाणे पुरत्थिमिल्लेणं दारेणं अणुपविसइत्ति। एतद्व्याख्या—ततो देवपरिवृतः सिद्धायतनमागच्छति त्रिःप्रदक्षिणां करोतीति। तस्मादविदितसिद्धान्तव्यक्तेरिदं वच इत्युपेक्षणीयमिति। तथा प्रकर्षेण भक्त्यतिशयेन नमनानि भूमौ मूर्ध्नाश्लेषलक्षणानि प्रणामास्तिस्रो विधाः प्रकारा यस्यां सा, तथा पूजार्चा वक्ष्यमाणा अवस्थात्रिकभावनमपि वक्ष्यमाणमेव, तथा तिस्रश्चोर्ध्वाधस्तिर्यग्लक्षणास्ता दिशश्च तासां निरीक्षणविरतिः, जिनबिम्बसन्मुखमेवावलोकनीयमिति हृदयम्। तिस्रो विधा वारा लक्षणा यस्य तत्तथा चरणयोरधोन्तराले चेत्यर्थः। भूमिप्रमार्जनम्। वर्णादित्रिकं मुद्रात्रिकं त्रिविधं च प्रणिधानं वक्ष्यमाणस्वरूपम्, अव्ययानि सर्वाणि समुच्चयार्थानीति गाथाद्वयार्थः ॥३५॥

विधिवन्दनामुपसंहरंस्तत्फलमाह—

॥ मूलम् ॥—इय दहतियसंजुत्तं वंदणयं जो जिणाण तिक्कालं।
कुणइ नरो उवउत्तो सो पावइ सासयं ठाणं ॥ ३६ ॥

व्याख्या—स्पष्टा, नवरमुपयुक्तोऽवहितोवर्णितविधावेव सोपयोगस्यैव भाववन्दनाभ्युपगमेन फलावाप्तेः। यदाह—

॥ २७ ॥

वदंतो सम्मं चेइयाइं सुहझाणपगरिसं लहइ । तत्तो य कम्मनासं पणठकम्मो य निव्वाणं ॥१॥ इति ॥३६॥ अथ पूजा १ अवस्था २ वर्णादि ३ मुद्रा ४ प्रणिधान ५ त्रिकाणि सार्द्धेन गाथाद्वयेन विवृणोति—

॥ मूलम् ॥—पुप्फामिसथुइभेया तिविहा पूया अवत्थतियगं तु ।
होइ छउमत्थकेवलि—सिद्धत्तं भुवणनाहस्स ॥ ३७ ॥
वणाइतियं तु पुणो वणत्थलंबणससरूवं तु ।
मणवयणकायजणियं तिविहं पणिहाणमवि होइ ॥ ३८ ॥
मुद्दातियं तु इच्छं विन्नेयं होइ जोगमुद्दाइ ।

व्याख्या—पुष्पामिषस्तुतिभेदात् त्रिविधा पूजा, ननु पूर्वमष्टधा बहुधा च पूजोक्ता, इयं तु त्रिधेति कथं न विरोधः? उच्यते, तेषु त्रिषु भेदेष्वष्टानामवशिष्टानां च भेदानामन्तर्भावो विवक्षावशात्, तथाहि—

पुष्पोपादानात् स्नपनसमालभमण्डनगन्धधूपवस्त्राभरणाद्यङ्गपूजासंग्रहः । आमिषं नैवेद्यं तच्च तंडुलफलपक्वान्नखण्ड-शर्करेक्षुजलदीपनृत्यवाद्यस्वस्तिकरङ्गावलीतोरणाद्यग्रपूजोपलक्षणम्, स्तुतिग्रहणादेकादिसप्तान्तश्लोकाष्टकचतुर्विंशतिकाद्वा-त्रिंशिकापञ्चाशिकाष्टोत्तरशतश्लोकबहुविधगीतादिस्तवनविधिपरिग्रहः । अवस्थात्रिकं तु भवति भुवननाथस्येति योगः, किं तदित्याह—छद्मस्थश्च केवली च सिद्धश्च तेषां भावस्तत्त्वम्, छद्मस्थावस्था केवल्यवस्था सिद्धावस्था चेत्यर्थः । वर्णादित्रिकं तु, पुनरित्यव्ययम् वर्णार्थावलंबनस्वरूपं, तुरेवकारार्थः, तत्र वर्णा व्याविद्धव्यत्याम्रेडितत्वादिदोषरहितान्यक्ष-

राणि अर्थस्तदभिधेयम्, आलम्बनं जिनबिम्बम् एतानि स्वरूपं यस्य तत्तथा तथा मनोवचनकायजनितं प्रणिधानमपि त्रिविधं भवति, तत्र संवेगरसानुविद्धमन्तःकरणस्थैर्यं मनःप्रणिधानम् प्रतिकुञ्चितादिदोषरहितस्तत्त्वोच्चारणं वचनप्रणिधानम्, निभृताङ्गोपाङ्गत्वं कायप्रणिधानमिति । तथा मुद्रात्रिकं पुनरित्थं इत्यनुस्वारस्य प्राकृतत्वादत्र चैत्यवन्दनायां विज्ञेयं भवति योगमुद्रादि, योगमुद्रा सुनद्ध मुक्ताशुक्तिमुद्रालक्षणम् । कुतः पुनरिदमित्याशङ्कायां वृद्धसम्मतमुपदर्शयितुकाम उत्तरार्धमाह--

हरिभद्रसूरि विरइय गंथंमि इम जओ भणियं ॥३९॥

व्याख्या—सुगमा, नवरं हरिभद्रसूरिविरचिते ग्रन्थे पञ्चाशकाख्ये इति ॥३९॥ अथ तद्भणितमेव गाथापञ्चकेनाह—

॥मूलम्॥—पंचंगो पणिवाओ थयपाढो होइ जोगमुद्दाए ।
वंदणं जिणमुद्दाए पणिहाणं मुत्तसुत्तीए ॥ ४० ॥
दो जाणू दोन्नि करा पंचमगं होइ उत्तमंगं तु ।
संमंसंपणिवाओ ते पंचंगपणिवाओ ॥ ४१ ॥
अन्नोन्नंतरियंगुलि—कोसागारेहिं दोहिं हत्थेहिं ।
पिट्टोवरि कुप्परसं—ठिएहिं तह जोगमुद्दत्ति ॥४२॥
चत्तारि अंगुलाइं पुरओ ऊणाइं जत्थ पच्छिमओ ।
पायाणं उस्सग्गो एसा पुण होइ जिणमुद्दा ॥४३॥



॥ २९ ॥

मुत्तासुत्तीमुद्दा समा जिहिं दोवि गब्भिया हत्था ।
ते पुण निलाडदेसे लग्गा अन्ने अलग्गत्ति ॥४४॥

व्याख्या—तत्र पञ्चाङ्गान्येव यथाविरक्षितव्यापारवन्ति यत्र स पञ्चाङ्गः प्रणिपातः प्रणिपातदण्डरूपाठस्यादाववसाने च प्रणामो भवति कर्तव्य इति शेषः । तथा स्तवपाठो भवति कर्तव्य इति शेषः । कयेत्याह—

योगमुद्रया वक्ष्यमाणलक्षणया । ननु चतुर्विंशतिस्तवादेरेव पाठो योगमुद्रया विधेयो, न तु शक्रस्तवस्य, तं हि समाकुञ्चितवामजानुर्भूविन्यस्तदक्षिणजानुर्ललाटतटघटितकरकुड्मलः पठतीति जीवाभिगमादिष्वभिधीयत इति । सत्यं, केवलं नानन्तरोक्तविशेषणयुक्त एव तं पठतीति नियमोऽस्ति, पर्यङ्कासनस्थः शिरोविनिवेशितकरकोरकस्तं पठतीत्यस्यापि ज्ञाताधर्मकथादिषु दर्शनात् तथा हरिभद्राचार्येणापि चैत्यवन्दनवृत्तौ क्षितिनिहितजानुकरतलो भुवनगुरौ विनिवेशित नयनमानसः प्रणिपातदण्डकं पठतीत्यस्य विध्यन्तरस्याभिधानात्, ततोऽस्य पाठे विविधविधिदर्शनात्सर्वेषां च तेषां प्रमाणग्रन्थोक्तत्वेन निषेद्धुमशक्यत्वाद्योगमुद्रयापि शक्रस्तवपाठो न विरुद्ध्यते विचित्रत्वान्मुनिमतानां, न चैतानि परस्परमतिविरुद्धानि, सर्वैरपि विनयस्य दर्शितत्वादिति । तथा 'वंदणत्ति' इहानुस्वारलोपो द्रष्टव्यस्तेन वन्दनं अरिहंतचेइयाणं इत्यादि दण्डकपाठे जिनबिम्बादिस्तवनं जिनमुद्रयोपदेक्ष्यमाणलक्षणया, इयं च पादाश्रिता योगमुद्रा च हस्ताश्रितेति उभयोर्वन्दने प्रयोगः । तथा प्रणिधानं शुभार्थप्रार्थनारूपं, विशिष्टचित्तैकाग्रतागर्भं 'जयवीयराय' इत्यादिपाठरूपं मुक्ताशुक्त्या निर्देक्ष्यमाणमुद्रया कर्तव्यमिति गाथार्थः ॥४०॥

अथ पञ्चाङ्गप्रणिपातादीनां व्याख्या—द्वे जानुनी अष्ठीवन्तौ द्वौ करौ हस्तौ, पञ्चममेव पञ्चमकं भवति वर्तते उत्तमाङ्गं तु शिर एवेत्यनेन पञ्चाङ्ग इति व्याख्यानम्, एतैरेव पञ्चभिरङ्गैः सम्यग्भक्तितो भून्यासतो यः संप्रणिपातः प्रणामोऽसौ ज्ञेयो ज्ञातव्यः पञ्चाङ्गप्रणिपातः पूर्वोक्तानिर्वचन इति ॥४१॥ योगमुद्रास्वरूपमाह—अन्योऽन्येन परस्परेणान्तरिता व्यवहिता अङ्गुल्यः करशाखा ययोस्तौ, तथा तौ च तौ कोशाकारौ च कमलकोरकाकृती उभययोजनेन अन्योन्यान्तरिताङ्गुलिकोशाकारौ, ताभ्यां द्वाभ्यां हस्ताभ्यां, किंभूताभ्यां ? 'पिट्टत्ति' उदरस्योपरि ऊर्ध्वभागे कूर्पराभ्यां कफणिकाभ्यां स स्थितौ व्यवस्थितौ यौ तौ तथा ताभ्यां, उदरोपरि कूर्परसंस्थिताभ्यां, तथेति पञ्चाङ्ग-प्रणिपातापेक्षया समुच्चयार्थः । योगो हस्तयोर्योजनविशेषः समाधिर्वा, तत्प्रधाना मुद्रा अङ्गन्यासविशेषो विघ्न-विशेषव्यपोहनसमर्थो योगमुद्रा भवतीति गम्यते । इतिशब्दो योगमुद्रालक्षणसमाप्तिसंसूचक उपप्रदर्शनार्थो वा, इति एवंप्रकारा योगमुद्रेत्यर्थः ॥४२॥ अथ जिनमुद्रामाह—चत्वारीतिसङ्ख्या अङ्गुलानि प्रतीतानि तानि च स्वकीयान्येव पुरतोऽग्रतस्तथा ऊनानि किंचिदूनानि चत्वार्येवाङ्गुलानि यत्र यस्यां मुद्रायां पश्चिमतः पश्चिमभागेऽथ पाद्योश्चरण-योरुत्सर्गः परस्परपरित्यागः संसर्गाभावोन्तरमित्यर्थः, एषासौ, पुनःशब्दो योगमुद्रापेक्षया जिनमुद्राया वैलक्षण्यप्रति-पादनार्थो भवति, जिनानामर्हतां कृतकायोत्सर्गाणां सत्का, जिना वा विघ्नजैत्री मुद्रा अङ्गन्यासविशेषो जिनमुद्रेति ॥४३॥ अथ मुक्ताशुक्तिमुद्रामाह—मुक्तशुक्तिरिव मुक्ताशुक्तिर्मुद्रा प्रतीता सा भवतीति वाक्यशेषः, समौ नान्योन्या-न्तरिताङ्गुलितया विषमौ यस्यां मुद्रायां भवतः स्तः, गर्भिताविव गर्भितावुन्नतमध्यौ, न तु नीरन्ध्रौ हस्तौ पाणी,

इहैव लक्षणशेषमाह—तौ मुक्तशुक्तिविधायकौ हस्तौ, पुनःशब्दो लक्षणान्तरत्वद्योतनार्थः। ललाटदेशे भाललक्षणे शरीरभागे लग्नौ सम्बद्धौ कार्यौ, अन्ये त्वपरे पुनराचार्या अलग्नावसम्बद्धौ ललाटदेशे इत्येतदाहुरिति शेष इति। ननु प्रणिधानं मुक्ताशुक्त्येत्युक्तं, तच्च किल वन्दनान्ते क्रियते, अतः शेषा वन्दना प्रणिधानविरहितैव करणीयेति प्राप्तमित्यत्रोच्यते—यदेतद्वन्दनान्ते प्रणिधानं तत्प्रार्थनागर्भोपयोगरूपं, यत्पुनर्वन्दनायां तत्तदेकाग्रतारूपमतस्तत्सर्वत्र वन्दनायां विधेयमिति गाथापञ्चकार्थः ॥४४॥ अथ व्याख्यातशेषत्रिकार्थस्वरूपं निरूप्य तदाचरणफलमाह—

॥ मूलम् ॥—**पयडो सेसतियत्थो तत्तो नाऊण एयतियदसगं।**
**सम्मं समायरंतो विहिचेइयवंदगो होइ ॥४५॥**

व्याख्या--प्रकटः स्पष्टः शेषत्रिकाणां नैषेधिकीत्रिकादीनामर्थः। तत्त इति द्वित्वं प्राकृतत्वात्, ततः पूर्वेषां विवरणादमीषां च प्राकट्याद् ज्ञात्वाधिगम्यैतत् त्रिकदशकं सम्यग्यथावत्समाचरन् विदधानो विधिना सूत्रोक्तेन चैत्याना-मर्हत्प्रतिमानां वन्दको विधिचैत्यवन्दको भवति, तदन्यस्तु यथाकथञ्चिल्लोकप्रवाहतो वन्दमानोऽप्यविधिचैत्यवन्दक इत्यावेदितं भवतीति गाथार्थः ॥४५॥ अवसितश्चैत्यवन्दनाविधिरधुना स एव कस्य कतिवारा भवतीत्याह--

॥ मूलम् ॥—**साहूण सत्तवारा होइ अहोरत्तमज्झयारम्मि।**
**गिहिणो पुण चेइवंदण तिय पंच व सत्त वा वारा ॥४६॥**

व्याख्या—सुगमा, अथ कथं यतेः सप्तवाराश्चैत्यवन्दना इत्याह--

**॥ मूलम् ॥—पडिक्कमणे चेइयहरे भोयणसमयम्मि तहय संवरणे ।**
**पडिक्कमणसुयपडिबोह—कालियं सत्तहा जइणो ॥४७॥**

व्याख्या—प्रतिक्रमण इत्युक्तेऽपि प्रतिक्रमणान्त इति दृश्यं, ततश्च प्रतिक्रमणान्ते, प्रातरावश्यकान्ते, चैत्यगृहे जिनमन्दिरे, भोजनसमये जेमनकाले, तथा चेति समुच्चये, संवरणे, समयशब्दस्यात्रापि सम्बन्धाद्भोजनोर्ध्वं प्रत्याख्यानसमये विधीयमानमिति शेषस्तथा प्रतिक्रमणं दिनान्तावश्यकं, स्वपनं च शयनं, प्रतिबोधश्चोत्थानं, तेषां कालस्तत्र भवं प्रतिक्रमणस्वपनप्रतिबोधकालिकमिति सप्तधा यतेश्चैत्यवन्दनं भवतीति योगः । गृहिणः पुनस्त्रयः पञ्चसप्त वा वारा एतद्यथानुसारतोऽवसेयाः, तथाहि—पडिकमओ गिहिणोवि हु सत्तविहं पंचहा उ इयरस्स । होइ जहणेण पुणो तीसुवि संझासु इय तिविहं ॥१॥ इति गाथार्थः ॥४७॥ यावत्कृत्वश्चैत्यवन्दना विधेयेत्यभिहितं, सा च प्रायो जिनवेश्मनि कर्तव्येति सम्बन्धेन तद्गतमेव विधिशेषोपदेशमाह—

**॥ मूलम् ॥—जिणमंदिरभूमीए दसगं आसायणाण वज्जेह ।**
**जिणदव्वभक्खणे रक्ख—णे य दोसे गुणे मुणह ॥४८॥**

व्याख्या—जिनमन्दिरभूमावर्हद्गृहमह्यामायं सम्यक्त्वादिलाभं शातयन्तीत्याशातनास्तासां दशकं वर्जयत परिहरत । तथा जिनद्रव्यभक्षणे रक्षणे च यथासंख्यं दोषान् गुणांश्चकारादुपेक्षणे दोषान्मुणतावबुध्यध्वमिति गाथार्थः ॥४८॥ किं तदाशातनादशकमित्याह—



॥३३॥

॥ मूलम् ॥—तंबोलपाणभोयणो—पाणहथीभोगसुयणनिठुवणं ।
मुत्तुच्चारं जूयं वज्जे जिणमंदिरस्संतो ॥४९॥

व्याख्या—तांबूलं च प्रतीतं, पानं च जलादेः, भोजनं चाभ्यवहार, उपानहौ च पादुके, स्त्रीभोगश्च मैथुनं, स्वपनं शयनं, निष्ठीवनं च खेलश्लेष्माद्युज्झनमिति समाहारस्तथा मूत्रं च दुरोदर वर्जयेत्परिहरेद् जिनमन्दिरस्यान्तमध्ये । इह चतुरशीत्याशातनाः केचनामनन्ति. तथाहि—खेलं १ केलि २ कलिं ३ कला ४ कुललयं ५ तंबोल ६ मुग्गीलयं ७; गाली ८ कंगुलिया ९ सरीरधुवणं १० केसे ११ नहे १२ लोहियं १३ । भत्तोसं १४ तय १५ पित्त १६ वंत १७ दसणे १८ विस्सामणं १९ दामणं २० दंत २१ त्थी २२ नह २३ गंड २४ नासिय २५ सिरो २६ सोय २७ छवीणं मलं २८ ॥१॥ मंतं २९ मीलण ३० लिक्खयं ३१ विभजणं ३२ भंडार ३३ दुष्ठासणं ३४ छाणी ३५ कप्पड ३६ दालि ३७ पप्पड ३८ वडी ३९ विस्सारणं नासणं ४० । अकंदं ४१ विकहं ४२ सरत्थघडणं ४३ तेरिच्छिसंठावणं ४४; अग्गीसेवणं ४५ रंधणं ४६ परिखणं ४७ निस्सीहियाभंजणं ४८ ॥२॥ छत्तो ४९ वाणह ५० सत्थ ५१ चामर ५२ मणोणेगंत ५३ मप्भंजणं ५४; सच्चित्ताणमचाय ५५ चायमजिए ५६ दिठीइ नो अंजली ५७ । साडेगुत्तरसंगभंग ५८ मउडं ५९ मोलिं ६० सिरोसेहरं ६१, हुड्डा ६२ जिंडुहगिडियाइरमणं ६३ जोहार ६४ भंडकियं ६५ ॥३॥ रेकारं ६६ धरणं ६७ रणं ६८ विवरणं वालाण ६९ पल्हत्थियं ७० पाऊ ७१ पायपसारणं ७२ पुडपुडी ७३ पंकं ७४ रओ ७५ मेहुणं ७६ । यूया ७७ जेमण ७८

जुअ ७९ विज्ज ८० वणिजं ८१ सिज्जं ८२ जलं ८३ मज्जणं ८४, एमाइयमवज्जकज्जमुज्जुओ वज्जे जिणिंदालये ॥४॥ व्याख्या—खेलं मुखश्लेश्मोज्झन १, केलिमान्दोलनजलादिविषयां २, कलिं मिथो वाक्कलहं ३, कलत्ति पाठादिकलाग्रहणं ४, कुललयंति गंडूषं ५, तांबूलं प्रतीतं, स्वादिमाहारोपलक्षणं चैतत् उजालयंति तम्बूलनिर्यास-रसोज्झनं ७, गालित्ति उच्छिष्टवचनं ८, कंगुलिलयत्तिमूत्रपुरीषे ९, सरीरधुवणंति केवलजलेन कंठस्नानं १०, केसित्ति भद्राकरणं ११, नहित्ति नखपरिकर्म १२, लोहियंति रक्ताकर्षणं १३, भत्तोसंति खादिमाहारं- १४, तयत्ति पामादिषु त्वगवयवोज्झनं १५, पितत्ति पित्तच्छर्दिः १६, वंतत्ति आहारोच्छालं १७, दसणत्ति दन्तपातनं १८, विश्रामणमङ्गसंवाहनं १९, दामनं कुदण्डकादिना पशुसंयमनं २०, दंतत्ति दन्ताः २१, अच्छित्ति अक्षिणी २२ नहित्ति नखाः २३, गंडत्ति कपोलौ व्रणानि वा २४, नासियत्ति घ्राणं २५, सिरत्ति शिरः २६, सोयत्ति श्रवणे २७, छवित्तित्वक् तासां मलत्ति मलोज्झनं २८, मन्त्रमधर्म्यमालोचनं २९, मीलनं मल्लगणादि-मेलापकं ३०, लेख्यकं पुस्तकादिलिखनमायव्ययादिप्रत्यवेक्षणं वा ३१, विभजनं दायादादेर्मिथः साधारणव-स्तूनां ३२, भांडागारं कोशं ३३, दुष्टासनं मश्चिकागब्दिकादि ३४, छाणित्ति छगणस्थापनं, जलगालनमित्यन्ये ३५, कप्पड ३६, दालि ३७, पप्पड ३८, वडित्ति ३९ प्रतीतानि तद्विस्तारणं नाशनं भयेष्वाश्रयणम् ४०, आक्रंद ४१ विकथे ४२ प्रतीते। सुरत्थवडणंति स्त्रोपकरणघटनं, चैत्योपकरणघटने तु न दोषः ४३, तिर्यक्-संस्थापनमवद्धचतुष्पदधारणम् ४४, अग्निसेवन ४५, रन्धने ४६, प्रतीते परीक्षणं रूप्यकरत्नादे ४७, नैषेधिकीभञ्जनम्

॥३५॥

४८, छत्र ४९ उपानत् ५० शस्त्र ५१ चामराणि ५२ प्रतीतानि, नवरमुपानहौ चर्ममय्यौ । मणोणेगंतत्ति चेतसोऽसमाहितत्वम् ५३, अभ्यञ्जनं तैलाद्यैः ५४, सचित्तानां पुष्पादीनामत्यागं ५५, त्यागमजीवस्य स्वर्णादेः ५६, दृष्टौ भगवद्दर्शनेऽञ्जलेरबन्धनम् । ५७, एकसाटकोत्तरासङ्गभंगं प्रतीतं ५८, मुकुटं स्वर्णादिमयं ५९, मौलिं शिरसि वासोवेष्टनं ६०, शिरःशेखरं पुष्पापीडं ६१, हुड्डां प्रसिद्धां ६२, जिंडुहगिडियाइरमणंति कन्दुकादिक्रीडा ६३, जोहारत्ति लोकस्थित्या मिथःपादपतनादि, वन्दनकदानस्यैव विहितत्वात् ६४, भण्डक्रिया ६५, रेकारो गतार्थः ६६, धरणं चौराधमर्णादेः ६७, रणं शस्त्राशस्त्रि ६८, विवरणं वालानां व्यक्तं, केशपरिकर्मोपलक्षणं चैतत्, न जृम्भाट्टहासादितः ६९, पर्यस्तिकां ख्यातां, परिकरबंधाद्युपलक्षणमिदं ७०, पादुकां काष्ठादिमयीं ७१, पादप्रसारणं व्यक्तं, मुखप्रसारणाद्युपलक्षणं चैतत्, तेन जृम्भाट्टहासादिसंग्रहः ७२, पुडपुडित्ति सुविदितं ७३, पङ्कमिति पङ्कलिप्ताङ्घ्रिगमनमङ्घ्रिलग्नपङ्कापनयनं वा ७४, रजश्चरणरेणुप्रमार्जनं, रजस्वलागमनमित्यन्ये ७५, मैथुनं प्रतीतं ७६, यूयंति यूकामत्कुणाद्युत्सारणं ७७, जेमनमशनाहारं ७८, युद्धं मल्लादीनां ७९, विज्जत्ति वैद्यकं ८०, वाणिज्यं प्रतीतं ८१, सिज्जंति शयनं ८२, जलं पानाहारं ८३, मज्जनं शिरःस्नानम् ८४ एमाइयंति अभक्तय-ङ्गानां भूयस्त्वादेवंजातीयाविधयः कति सङ्ख्यायन्ते ! उज्जुउत्ति प्रयतो वर्जयेदिति सर्वत्र योज्यं यथासंभवं, विभक्तिलोपपरिणामादिकं प्राकृतत्वादिति वृत्तचतुष्टयार्थः ॥४९॥ तथा निष्कारणमयत्नतश्चावग्रहे परिभोगेऽप्याशा-तनैव, इदमेव विवक्षुस्तावदवग्रहस्वरूपमाह—

॥ मूलम् ॥—संथावग्गह तिविहो उक्कोसजहन्नमज्झिमो चेव ।

उक्कोस सट्ठिहत्थो जहन्न नव सेस विच्चालो ॥५०॥

व्याख्या—शास्त्युपदिशति तत्त्वमिति शास्ता तीर्थकृत्, तस्यावग्रह आभाव्यभूप्रदेशस्त्रिविधस्त्रिप्रकारो भवतीति शेषः, त्रैविध्यमेवाह—उत्कृष्टो जघन्यो मध्यमश्चैवेति समुच्चये, कः कियानित्याह—उत्कृष्टः षष्ठिहस्तो, विभक्तिलोपाज्जघन्यो नवत्ति हस्तशब्दलोपान्नवहस्तः, शेषोऽनयोर्मध्यवर्ती विच्चालोत्ति मध्यम इति गाथार्थः ॥५०॥ ततश्च—

॥ मूलम् ॥—गुरुदेवग्गहभूमी पज्जत्तओ चेव होइ परिभोगो ।

इट्ठफलसाहगो सइ अणिट्ठफलसाहगो इयरो ॥५१॥

व्याख्या—गुरुर्धर्मोपदेशको देवश्चार्हंस्तयोरवग्रहभूमिस्तस्या यत्नत आशातनाभीरुतया संलीनाङ्गोपाङ्गत्वलक्षणप्रयत्नेन, चेवेत्यवधारणे, परिभोगो वैयावृत्त्यपूजादिकृते निषीदनोत्थानचङ्क्रमणादिरूप इष्टफलं निर्वृत्तिप्राप्तिलक्षणं, तस्य साधको भवतीति योगः सइत्ति सदा सर्वकालं यत्नत एव परिभोग इत्यनेनैतद्योज्यम् व्यतिरेकमाह—अनिष्टफलसाधको दुर्गतिजनक इतरथाऽयत्नतः । अथ देवतत्त्वविचारणायां को नाम गुरोरिह प्रस्तावः ? सत्यं, अवग्रहसाम्यात्, तदवग्रहप्रमाणं च—आयप्पमाणमोत्तो चउदिसिंहो अवग्गहो गुरुणो । अणणुणायस्स सया न कप्पइ तत्थ पविसेउं ॥१॥ इति । एवमप्याराध्यतरत्वेन देवशब्दस्य यथा प्रागुपादानं युज्यते न विवक्षया गुरूणां पूज्यतरत्वात्, न हि सद्गुरूपदेशं विना देवस्याप्यभिगम इति भाव इति गाथार्थः ॥५१॥ उक्तमेवार्थं किञ्चित्सविशेषमाह—

॥ मूलम् ॥—निट्ठीवणाइअकरणं असक्कहा अणुचियासणाई य ।
आययणंमि अभोगो इत्थ य देवा उदाहरणं ॥५२॥

व्याख्या—निष्ठीवनमादिर्यस्य दन्तधावनवदनक्षालनशरीरमलोज्झनादेस्तन्निष्ठीवनादि, तस्य अकरणं, क्व, ? आयतने जिनवेश्मनि, तथा असत्यशोभना कथा स्त्रीभक्तादीनामसत्कथा, तथानुचितासनं तूलीगब्दिकापल्यङ्काद्यासनं तस्याप्यकरणमितीहापि सम्बध्यते चः समुच्चये; अभोगोऽवस्थानादिपरिहारः। अत्र चास्मिन् पूर्वोक्तेऽर्थे देवा भवनपत्यादय उदाहरणं निदर्शनमिति गाथार्थः ॥५२॥ एतदेवाह—

॥ मूलम् ॥—देवहरयम्मि देवा विसयविसविमोहियावि न कयावि ।
अच्छरसाहिंपि समं हासखिड्डाइवि कुणंति ॥५३॥

व्याख्या—देवगृहकं यस्मिन् देवाः पूर्वोक्ताः, विषीदन्ति धर्मघातेन नोत्सहन्ते एषु, विषिण्वन्ते वाभिष्वजन्ते जन्तव एष्विति विषयाः, यद्वा आसेवनकाले मधुरत्वेन, परिणामे चातिकटुकत्वेन विषस्योपमां यान्तीति विषयाः शब्दादयस्त एव विषं, तेन विशेषेण नितान्तलोलुपत्वलक्षणेन मोहिता अपि मूर्च्छिता अपि कदाचिदपि न कुर्वन्तीति सम्बन्धः, किं ? हासखिड्गाद्यपि, आस्तां तत्संभोगादि, तत्र हासपूर्वंखिड्गं हासखिड्गं कौतुकादिकरणं, काभि ? अप्सरोभिरपि समं देववेश्यादिभिः सहापि इदमत्र हृदयं—यदि तावदत्यन्तविषयिणः सतताविरताश्च देवा अप्यसच्चेष्टापरिहारेण संवृतात्मानो जिनभवनादौ तिष्ठन्ति तदा विरताविरतैः सुतरां तत्परिहारेण तत्र स्थातुं युज्यत

इति गाथार्थः ॥ ५३ ॥ आशातनादशकं वर्जयेतेति व्याख्यातमधुना जिनद्रव्यभक्षणेत्यादि व्याचिख्यासुः श्लोकं गाथाद्वयं चाह--

॥ मूलम् ॥—भक्खेइ जो उवक्खेइ जिणदव्वं तु सावओ ।
पन्नाहीणो भवे जो उ लिप्पइ पावकम्मुणा ॥५४॥
आयाणं जो भंजइ पडिवन्नं धणं न देइ देवस्स ।
नस्संतं समुवेक्खइ सोवि हु परिभमइ संसारे ॥५५॥
चेइयदव्वं साहारणं च जो दुहइ मोहियमईओ ।
धम्मं व सो न जाणइ अहवा बद्धाउओ नरए ॥५६॥

व्याख्या--भक्षयति भुनक्ति यः श्रावकः श्रावकग्रहणं चास्य जानतो भक्षणे गरीयान् दोष इति ज्ञापनार्थं, यावता अन्योऽपि पापकर्मणा लिप्यत एव, वक्ष्यमाण तु शब्दस्य समुच्चयार्थस्येह सम्बन्धादुपेक्षते वान्यैर्विलुप्यमानं, किमेतैः स्वजनादिभिर्मम विरोधितैरित्युदास्ते, किमित्याह--जिनस्य स्थापनार्हतो द्रव्यं पूजार्थनिर्माल्याक्षयनिधिस्वरूपं, तथा तुशब्दोऽपिशब्दार्थो भिन्नक्रमश्च, ततः प्रज्ञाहीनोऽप्यल्पेन बहुना वार्थेन कार्यसिद्धिमजानानो मन्दमतितया यथाकथञ्चिद् द्रव्यव्ययकारी लेख्यकूटश्च यो भवेत्, यत्तदोर्नित्यसम्बन्धात् स लिप्यते पापकर्मणाऽशुभप्रकृतिरूपेण लिप्यत इत्यनेन च तज्जनितकर्मणो दृढबन्धत्वमाहेति ॥ ५४ ॥ तथा 'आयाणंति' आयदानं, प्राकृतत्वाद्यलोपः, राजामात्यादिवितीर्ण-

॥३९॥

क्षेत्रगृहहट्टग्रामादि यो भनक्ति लुम्पति, तथा प्रतिपन्नधनं, म्रियमाणे पित्रादौ स्वयं वा धर्मनिमित्तमेतावद्दास्यामीति कल्पितद्रव्यं न ददाति न वितरति देवाय, चतुर्थ्यर्थे षष्ठीयं, तथा नश्यदायदानादिकमेव प्रलीयमानं तच्चिन्तकभक्षणादिना केनचित्प्रकारेण, यो यत्करिष्यति स तत्फलमवाप्स्यतीति बुद्ध्या समुपेक्षते, न प्रतिजागर्ति सामर्थ्ये सतीत्यध्याहार्यं, सोऽपि, न केवलं भक्षकादयः, हुरेवकारार्थः, परिभ्रमत्येव संसरत्येव संसारे चतुर्गतिके, अप्रतिषिद्धमनुमतमिति न्यायतस्तस्याप्यनुमतिप्रसङ्गादिति ॥ ५५ ॥ तथा चैत्यद्रव्यं प्रतीतं, साधारणं च जीर्णचैत्योद्धारादिनिमित्तमेकत्रमीलितं सप्तक्षेत्रोपयोगि वा, यः पापकर्मा दुह्यति भक्षयति, वाशब्दोऽप्यर्थे, धर्ममपि सर्वज्ञप्रणीतं स न जानाति, न खलु तीर्थप्रवृत्त्यादिहेतुचैत्यादिद्रव्यरक्षाप्रतिपादकं तद्भक्षकाणां दुर्विपाकाभिधायकं च जिनवचनं विदन्त एवं प्रवर्तन्ते, ननु विदितवचना अप्येवं प्रवर्तमाना दृश्यन्त एवेत्याह—अथवा भक्षणकालात् प्राग्बद्धायुष्को नरके, स हि जानन्नपि फलमकृत्यान्न विरमतीति रूपकत्रयार्थः ॥ ५६ ॥ आस्तां श्रावकः, साधुनापि तद्विनाशे नोपेक्षा विधेया, यतः—

॥ मूलम् ॥—चेइयदव्वविणासे तद्दव्वविणासणे दुविहभेए ।
साहू उविक्खमाणो अणंतसंसारिओ भणिओ ॥५७॥

व्याख्या—चैत्यं पञ्चधा, साधर्मिकचैत्यं यथा साध्वादीनां, मङ्गलचैत्यं गृहद्वारदेशादिनिकुट्टितप्रतिमारूपं, शाश्वतं नन्दीश्वरादिव्यवस्थितं, भक्तिचैत्य भक्त्या कृतं जिनायतनं, तच्च साधुनिश्रया कृतं निश्राकृतं तदनिश्रयाकृतं त्वनिश्राकृतं । इह तु सामान्येन जिनायतनं गृह्यते, तस्य द्रव्यं हिरण्यसुवर्णादिरूपं, तस्य विनाशे जायमाने, तथा

तद्द्रव्यविनाशने तस्य चैत्यस्य द्रव्यमुपकारकं दारूपलेष्टकादिवस्तु तस्य विनाशने संपद्यमाने, द्विविधभेदे नूतन-लग्नोत्पाटितविनाशरूपद्विप्रकारभेदे, मूलोत्तरभेदाद्वा, तत्र मूलं स्तंभकुंभादि, उत्तरं तु छादनादि, स्वपरपक्षजनित-विनाशद्वैविध्याद्वा द्विविधभेदे, यदाह––जुग्गं अईयभावं मूलुत्तरभावओ अहव कट्ठं। जाणाहि दुविहभेयं सपक्ख-परपक्खमाई वा ॥१॥ स्वपक्षः श्रावकादिः, परपक्षो मिथ्यात्व्यादिः साधुर्यतिरुपेक्षमाणश्चैत्यद्रव्यादिविनाशमेवा-नन्तसंसारिको भणितस्तीर्थकृद्गणधरैरिति। अथ त्रिधाप्रत्याख्यातसावद्यस्य यतेश्चैत्यद्रव्यादिचिन्तायां को नामाधि-कार इति चेदुच्यते––यदि राजामात्याद्यर्थनपुरस्सरं गृहहट्टग्रामादिकायदानादिविधिनानवतरमुत्पादयति तदा भवति भवद्विवक्षितार्थसिद्धिः, यदा तु केनचिद्यथाभद्रकादिना धर्माद्यर्थं प्राग्वितीर्णमन्यद्वा जिनद्रव्यं विलुप्यमानं रक्षति तदा नाभ्युपेतार्थहानिरपि तु पुष्टिरेव, सम्यग्जिनाज्ञाराधनाद्, यथाहि जिनभवनं नवमकारयतोऽपि पूर्वकृतं तु तत्प्रतिपन्थिनिग्रहेणापि रक्षतो न प्रायश्चित्तं नापि प्रतिज्ञाभङ्ग इति। आगमोऽप्येवमेव व्यवस्थितः, यदाह––

चोएइ चेइयाण खेत्तहिरणेय गामगावाणं। लग्गंतस्सउ जइणो तिगरणसोही कहं तु भवे ॥१॥ भणइ इत्थविभासा जो एयाइं सयं विमग्गेज्जा। तस्स न होई सोही अह कोइ हरेज्ज एयाइं ॥२॥ तत्थकरंतुच्चेहं सा जा भणियाउ तिगरणविसोही। सा य न होइ अभत्तीय तस्स तम्हा निवारेज्जा ॥३॥ सव्वथामेण तहिं संवेणय होइ लग्गिव्वं तु। सचरित्तअचरित्तीण य सव्वेसिं होइ कज्जं तु ॥४॥इति गाथार्थः ॥५॥ इह च प्रेक्षावत्प्रवृत्तेः फलेप्साव्याप्तत्वाद् जिनद्रव्यप्रभावातिरेकेण पुरस्सरं भक्षणरक्षणवर्द्धनफलोपदर्शनाय गाथात्रयमाह–

॥ मूलम् ॥—जिणपवयणवुड्ढिकरं पभावगं नाणदंसणगुणाणं ।
भक्खंतो जिणदव्वं अणंतसंसारिओ होइ ॥५८॥
जिणपवयणवुड्ढिकरं पभावगं नाणदंसणगुणाणं ।
रक्खंतो जिणदव्वं परित्तसंसारिओ होइ ॥५९॥
जिणपवयणवुड्ढिकरं पभावगं नाणदंसणगुणाणं ।
वड्ढंतो जिणदव्वं तित्थयरत्तं लहइ जीवो ॥६०॥

व्याख्या—जिनप्रवचनमार्हतशासनं, तस्य वृद्धिकरं तत्सन्तानाव्यवच्छित्तिहेतुतया तथा प्रभावकं दीपकं ज्ञानदर्श-
नगुणानामुपलक्षणत्वाच्चारित्रगुणानां च, न खलु जिनप्रवचनवृद्धिर्जिनवेश्मविरहेण भवति, न च तद् द्रव्यव्यति-
रेकेण प्रतिदिनं प्रतिजागरयितु, जीर्णं विशीर्णं वा पुनरुद्धर्तुं पार्यते, तथा तेन पूजामहोत्सवादिषु श्रावकैः क्रिय-
माणेषु ज्ञानदर्शनचारित्रगुणाश्च दीप्यन्ते, यस्मादज्ञानिनोऽप्यहो तत्त्वानुगामिनी बुद्धिरेतेषामित्युपबृंहयन्तः क्रमेण
ज्ञानदर्शनचारित्रगुणलाभभाजो भवन्तीति गर्भार्थः । ततश्चैवंविधं जिनद्रव्यं भक्षयन्ननन्तसंसारिको भवति, तीर्थो-
च्छेदकत्वेन ज्ञानादिसकलगुणघातकत्वादिति । शेषं सुगमं, नवरं 'परित्तसंसारिओत्ति' परिसमन्तादितः खण्डितो
जिनद्रव्यरक्षणपरत्वेनोपगृहीतप्रवचनत्वादाराधितज्ञानादिगुणत्वाच्च । स चासौ संसारश्च, स विद्यते यस्य स परीत्त-
संसारिकः । तथा 'वड्ढंतुत्ति' उचितांशप्रक्षेपादिना कलान्तरप्रयोगादिना वा वृद्धिमुपनयन् तीर्थंकरत्वं लभते जीवः ।

अर्हद्वात्सल्यादुक्तन्यायेन प्रवचनप्रभावकत्वाच्च, यदाह––चेइयकुलगणसंघे उवयारं कुणइ जो अणासंसी । पत्तेयबुद्ध-गणहर तित्थयरो वा तओ होइ ॥१॥ जिनप्रवचनेत्याद्यालापकस्य वासकृद्भणनं, गमिकसूत्रत्वादिति गाथार्थः ॥६०॥ इति श्रीदेवभद्राचार्यविरचिते दर्शनशुद्धिप्रकरणविवरणे प्रथमं देवतत्त्वं समाप्तम् ॥ श्रीरस्तु ॥

व्याख्यातं लेशतो देवतत्त्वमिदानीं मूलद्वारगाथाक्रमप्राप्तं धर्मतत्त्वं विव्रियते, सम्बन्धश्चास्य प्राच्येन प्राग्देवस्वरूपं न्यक्षेण विवक्षितं, स चासौ देवः स्वयमधिगताशेषसमीहितव्योऽपि जन्तूनां हिताय यथा यथावस्थितं धर्ममुपदिदेश तथोच्यते, तत्रादौ गाथा––

॥ मूलम् ॥—जीवदयसच्चवयणं परधणपरिवज्जणं सुसीलं च ।
खंतीपंचेंदियनिग्ग—हो य धम्मस्स मूलाइं ॥१॥

व्याख्या––जीवितवन्तो जीवन्ति जीविष्यन्ति च जीवाः, चेतनादिलिङ्गव्यङ्ग्याः पृथिव्यादयः प्राणिनः तेषु दया कारुण्यम्, सत्यवचनं भूतहिता वाक्, परे आत्मव्यतिरिक्तास्तेषां धनं हिरण्यादि तस्य परिवर्जनं परिहारः, सुष्ठु शोभनं शीलं, चः समुच्चये, क्षान्तिः क्रोधनिग्रह, उपलक्षणं चेदं शेषकषायनिग्रहस्य, पञ्चेति पञ्चसङ्ख्यानीन्द्रियाणि स्पर्शनरसनघ्राणचक्षुःश्रोत्रलक्षणानि करणानि, तेषां निग्रहो निरोधः, स्वविषयवृत्तावपि रागद्वेषाकरणम् यदुक्तं––न शक्यं रूपमद्रष्टुं चक्षुर्गोचरमागतं । रागद्वेषौ तु यौ तत्र तौ बुधः परिवर्जयेत् ॥१॥ इति । इह पञ्चेन्द्रियनिग्रहस्य मनोनिग्रहपूर्वकत्वात्तन्निग्रहोऽपि वेदितव्यः । चः समुच्चये, धारयति दुर्गतौ निपततो जीवानिति धर्मः, तथा च वाचकः––

॥४३॥

प्राग्लोकबिन्दुसारे। सर्वाक्षरसंन्निपातपरिपठितः। धृञ्धरणार्थौ धातु--स्तदर्थयोगाद्भवति धर्मः ॥१॥ दुर्गतिभयप्रपाते पतन्तमभयकरदुर्लभत्राणे। सम्यक् चरितो यस्मात् धारयति ततः स्मृतो धर्मः ॥२॥ तस्य मूलानीव मूलानि तत्प्रतिष्ठत्वाद् धर्ममहामहीरुहस्य, संमतश्चायमर्थः सर्वास्तिकवादिनाम्, तथा चाहु—अहिंसा सत्यमस्तेयं त्यागो मैथुनवर्जनम्। पञ्चैतानि पवित्राणि सर्वेषां धर्मचारिणाम् ॥१॥ तथा--कषाया यस्य नोच्छिन्ना यस्य नात्मवशं मनः। इन्द्रियाणि न गुप्तानि। दर्शनं तस्य जीविका ॥१॥ एवं सर्वसम्मतं धर्ममुपदर्श्य स्वसमयप्रसिद्धविधिना गृहियतिभेदतस्तमभिधित्सुरभ्यस्तगृहिधर्म प्रायेण यतिधर्मयोग्यो भवतीतिन्यायाद्गुणस्थानक्रममाश्रित्य वा तावद्गृहिधर्ममाह—

॥ मूलम् ॥—**सम्मत्तमूलमणुव्वय—पणगं तिन्नि उ गुणव्वया हुंति।**
**सिक्खावयाइं चउरो बारसहा होइ गिहिधम्मो ॥२॥**

व्याख्या—सम्यक्त्वं प्राग्वर्णितस्वरूपं तन्मूलमादिर्यस्य तत्तथा, अनेन सम्यक्त्वलाभव्यतिरेकेण व्रताभाव दर्शयति। यदाह—सम्मत्तंमि उ लद्धे पलियपुहुत्तेण सावओ होइ। चरणोवसमखयाणं सागरसंखंतरा हुंति ॥१॥ चारित्रोपशमश्रेणिक्षपकश्रेणीनां सङ्ख्यातसागरोपमाण्यन्तरं भवति। अणुनि लघूनि महाव्रतापेक्षया व्रतानि, अणोर्वा यत्यपेक्षया गृहस्थस्य व्रतानि, यदिवा अनु पश्चान्महाव्रतप्रतिपत्त्यसमर्थस्य कथनीयानि, 'जइ धम्ममसमत्थे जुज्जइ तद्देसणंपि साहूणं' ॥ इति वचनात्। अणुव्रतान्यनुव्रतानि वा तेषां पञ्चकमनुव्रतपञ्चकमेव उत्तरपदस्थतुशब्दस्यैवकारार्थस्येह सम्बन्धात्तेन नामूनि मध्यमतीर्थेष्वपि महाव्रतानीव चत्वारि, यतः शैलकज्ञाते शैलकराजो नेमिनाथशिष्यस्यान्तिके पञ्चाणुव्रतिकं श्रमणोपासकधर्मं प्रतिपन्न इत्यभिहितमिति।

त्रीणि त्रिसङ्ख्यानि गुणायानुव्रतानामुपकाराय व्रतानि नियमा गुणव्रतानि, पुंस्त्वं तु प्राकृते लिङ्गमतन्त्रमिति वचनात्' भवन्ति क्रियापदं चैतद्वचनव्यत्ययेन पूर्वत्रोत्तरत्र सम्बध्यते । शिक्षा अभ्यासस्तत्प्रधानानि व्रतानि शिक्षाव्रतानि, पुनः पुनरासेवार्हाणीत्यर्थः । चत्वारि चतुःसङ्ख्यानि, इतिशब्दस्य लुप्तस्येह दर्शनादित्युक्तनित्या द्वादशधा भवति, गृहं स्वामित्वेन विद्यते यस्य स गृही श्रावक स्तस्य धर्म इति गाथार्थः ॥ २ ॥द्वादशभेदः श्रावकधर्मो भवतीत्यभिहितमथ तानेव नामग्राहमाह—

॥ मूलम् ॥—पाणिवहमुसावाए अदत्तमेहुणपरिग्गहे चेव ।
दिसिभोगदंडसमइय देसे तह पोसहविभागे ॥३॥

व्याख्या—प्राणिनो जीवास्तेषां वधो हिंसा प्राणवियोजनमित्यर्थः । मृषावादोऽसत्यभाषणम्, अदत्तमदत्तादानमवितीर्णग्रहणम्, एवमुत्तरत्रापि यथासम्भवं दृश्यं, मैथुनमब्रह्मसेवनं, परिग्रहो गार्ध्यमिह च सूचनात्सूत्रमिति सर्वत्र विरमणशब्दो दृश्यः, चैवेति समुच्चये, दिसित्ति दिक्परिमाणव्रतं, भोगत्ति भोगोपभोगपरिमाणकरणं, दंडत्ति अनर्थदण्डविरतिः, समइयत्ति सूचनात्सामायिकं, देसेत्ति देशावकाशिकं, तथा तेन व्रतस्वरूपलक्षणप्रकारेण, पौषधव्रतं, विभक्तिलोप एकारश्च यथासम्भवं सर्वत्र प्राकृतत्वादित्यक्षरगमनिका, विभागश्चैवं, तद्यथा—

उपासकः स्थूलनिरपराधजीवानभिसन्धाय द्विविधत्रिविधादिना भङ्गजालेन न हन्तीति प्रथमाणुव्रतं, तत्र स्थूला द्वित्रिचतुःपञ्चेन्द्रियास्तद् ग्रहणात्पृथिव्यादयो निरपराधग्रहणात्सापराधाश्चौरादयः, अभिसन्धायेति भणनादारम्भ-

सम्भवाद्बधाश्च, न व्रतविषयाः, भङ्गजालं च द्विविधत्रिविधेनेत्येको भङ्गः, द्विविधं कृतकारितभेदं वधं, त्रिविधेन मनसा वाचा कायेन च भावनावधं न करोत्यात्मना न कारयत्यन्यैर्मनसा वचसा कायेन चेति। अनुमतेस्तु सर्वत्र न प्रतिषेधोऽपत्यादिपरिग्रहसद्भावात्, तैर्हिंसादिकरणे च तस्यानुमतिप्राप्तेः १, द्विविधं द्विविधेनेति द्वितीयः, द्विविधमिति प्राग्वद् द्विविधेन मनसा, यद्वा मनसा कायेन, यदिवा वाचा कायेनेति २, द्विविधमेकविधेनेति तृतीयो द्विविधं भावितवत्, एकविधेन मनसा यद्वा वाचा यदिवा कायेन ३, एकविधं त्रिविधेनेति चतुर्थ, एकविधं करणं यद्वा कारणं त्रिविधेनेति पूर्ववद् ४, एकविधं द्विविधेनेति पञ्चम ५, एकविधमेकविधेनेति पष्ठः ६, यदाह—

दुविहतिविहेण पढमो दुविहं दुविहेण बीयओ होइ। दुविहं एगविहेणं एगविहं चेव तिविहेणं ॥ १ ॥ एगविहं दुविहेणं एगेगविहेण छठओ होइ। एते च भङ्गाः करणत्रिकेण योगत्रिकेण च विशेष्यमाणा एकोनपञ्चाशद्भवन्ति। तथाहि—हिंसां न करोति मनसा १ वाचा २ कायेन ३ मनसा वाचा ४ मनसा कायेन ५ वाचा कायेन ६ मनसा वाचा कायेन च ७, एते करणकारणाभ्यां सप्त, एवं करणानुमतिभ्यां, करणकारणानुमतिभिश्च सप्त सप्त, एवं सर्वे मीलिता एकोनपञ्चाशद्भवन्तीति। यदाह—सेयालं भंगसयं पच्चक्खाणम्मि जस्स उवलद्धं। सो खलु पच्चक्खाणे कुसलो सेसा अकुसलाओ ॥ १ ॥ एते अहिंसाव्रतमाश्रित्योक्ता व्रतान्तरेष्वपि द्रष्टव्या इति। १ कन्यागोभूम्यलीकन्यासापहारकूटसाक्ष्यलक्षणेभ्यः स्थूलासत्येभ्यो विरतिर्द्वितीयमणुव्रतं तत्र कन्यालीकं कन्यां सदोपामप्यदोषां विपर्ययं वा वदतः, सर्वद्विपदालीकोपलक्षणं चैतत्। गवालीकं गामल्पक्षीरामपि बहुक्षीरां विपर्ययं वा वदतः। इदमपि चतुष्पदाली-

कोपलक्षणम् । भूम्यलीकं भुवं परसत्कामप्यात्मसात्कुर्वतां विपर्ययं वा वदत एतदपि पादपाद्यपद्व्यलीकोपलक्षणम् न च वाच्यं द्विपदचतुष्पदापदग्रहणमेव कस्मान्न कृतमिति १ कन्याद्यलीकानां लोकेऽतिगर्हितत्वेन रूढत्वात्, अत एव हि न्यासापहारकूटसाक्ष्ये अपि भेदेनोपात्ते, न्यासापहारो न्यासीकृतसुवर्णाद्यपलापः, कूटसाक्ष्यं प्रमाणीकृतस्य लंचामत्सरादिना कूटं वदतः । एतानि पञ्च क्लिष्टाशयसमुत्थत्वात्स्थूलासत्यादीनि २ । सचित्ताचित्तमिश्रभेदाच्चौरव्यपदेशनिबन्धनस्थूलादत्तपरस्वाद्विरतिस्तृतीयमणुव्रतं, सूक्ष्मं तृणजलेन्धनदन्तशोधनं नात्राधिक्रियते ३. स्वदारसन्तोषः परदारवर्जनं वा चतुर्थं, परदाराः परकलत्राणि नारीदेवीतिरश्चीरूपाणि, तेषां वर्जनं, स्त्रियास्तु स्वभर्तृव्यतिरिक्तसर्वपुरुषवर्जनमिति ४. क्षेत्रवास्तुरूप्यस्वर्णधनधान्यद्विपदचतुष्पदकुप्यलक्षणस्य नवविधपरिग्रहस्य परिमाणकरणं पञ्चमाणुव्रतम् ५. क्षेत्रं शस्योत्पत्तिभूमिः, तत् त्रिविधं सेतुकेतूभयभेदात्, सेतु यदरघट्टादिजलेन सिच्यते, केतुक्षेत्रमाकाशोदकनिष्पाद्यशस्यम् । उभयमुभयजलनिष्पाद्यशस्यम् । वास्तु गृहादि ग्रामनगरादि च, गृहादि त्रिविधं, खातं भूमिगृहादि, उत्स्तृतं प्रासादादि, खातोत्स्तृतं भूमि गृहस्योपरि गृहादिसन्निवेशो२, रूप्यस्वर्णे स्पष्टे ४, धनं गणिमधरिममेयपरीक्षालक्षणम् ५, उक्तंच–

गणिमं जाईफलपुप्फ––लाइधरिमं च कुंकुमगुडाइ । मेयं चोप्पडलोणाइ रयणपत्थाइ परिच्छिज्जं ॥ १ ॥ धान्यं व्रीह्यादि ६, द्विपदं कलत्रदासशुकादि, ७, चतुष्पदं गवाश्वादि ८, कुप्यं स्थालकच्चोलपल्यङ्कादिसर्वो गृहोपस्करः ९, एतानि, पञ्चाणुव्रतानि मूलगुणा उच्यन्ते श्रावकधर्मतरोर्मूलकल्पत्वाद् । दिग्व्रतादीनि तु गुणव्रतशिक्षाव्रतानि शाखा-

प्रशाखाकल्पत्वादुत्तरगुणाः । तत्रोर्ध्वाधस्तिर्यग्दिग्गमनपरिमाणकरणं दिग्विरतिव्रतम् ६, भोगोपभोगयोः शक्त्या परिमाणकरणं भोगोपभोगव्रतम्, तत्र सकृद्भोग्यस्ताम्बुलाञ्जनस्रगादिर्भोगः, पुनःपुनर्भोग्यो वस्त्राङ्गनाभवनादिरूपभोगः। इदं च भोगोपभोगव्रतं, भोक्तुं योग्येषु परिमाणकरणेन तदितरेषु च वर्जनेन भवति । वर्जनीयानि च यथा--मद्यं मांसं नवनीतं मधूदुंबरपञ्चकम् । अनन्तकायमज्ञात--फलं रात्रौ च भोजनं ॥ १ ॥ आमगोरससम्पृक्त--द्विदलं पुष्पितौदनम् । दध्यहर्द्वितयातीतं कुथितान्नं च वर्जयेत् ॥ २ ॥ जन्तुमिश्रं फलं पुष्पं वान्यदपि त्यजेत् । सन्धानमपि संसिक्तं, जिनधर्मपरायणः ॥ ३ ॥

फलं मधूकबिल्वादेः, पुष्पमरणिशिग्रुमधूकादेः, पत्रं प्रावृषि तन्दुलीयकादे, रिह च भोगोपभोगकरणं, धनोपार्जनमपि भोगोपभोग उपचारात्तत्परिमाणमपि भोगोपभोगव्रतं, यतः श्रावकस्य खरकर्मपरिहारेणाजीविका, एतच्चातिचारप्रक्रमे वक्ष्यते । अर्थाय शरीरादिकृते दण्डो मनोवाक्कायैः प्राणिनां पीडनमर्थदण्डो न तथानर्थदण्डः, स चतुर्धा, तद्यथा--आर्तं रौद्रमपध्यानं पापकर्मोपदेशिता । हिंसोपकारिदानं च प्रमादाचरणं तथा ॥ १ ॥ तद्विरतिस्तृतीयं गुणव्रतम् । तत्रापध्यानं वैरिगणदेशघाताय नृपखेचरत्वादिप्रार्थनारूपं मुहूर्तात्परतो वर्जनीयम् । पापोपदेशं च वत्सतरदमनकर्पणादिकं पुत्रस्वजनादीन् विहायान्यत्र त्यजेत्, यन्त्रशस्त्राग्निमुशलोदूखलादीनि हिंस्रवस्तूनि च दाक्षिण्यविषयादन्यस्मै न दद्यात् । प्रमादाचरितं च द्यूतमद्यादिव्यसनं, कुतूहलाद्गीतनृत्तनाटकादिनिरीक्षणं, दोलाजलादिकेलिरनुबद्धकषायः सकलां रात्रिं स्वापो विकथा चेत्यादिकं वर्जयेदिति गुणव्रतानि ८ अथ शिक्षानामवसर, स्तत्रेन्द्रियमनःसमा-

हितस्य द्विविधत्रिविधं त्यक्तसावद्ययोगस्य मुहूर्त्तं समभावस्थितिः सामायिकव्रतम् । अत्र च प्रतिपन्ने श्रावकोऽपि यतिरिव भवति । यदाह--सामाइयंमि उ कए समणो इव सावओ हवइ जम्हा । एएण कारणेणं बहुसो सामाइयं कुज्जा ॥१॥ इह च श्रावकः सामायिकं कुर्वंश्चतुर्षु स्थानेषु करोति, जिनगृहे साधुसमीपे पौषधशालायां स्वगृहे वा, यत्र वा विश्राम्य निर्व्यापारो वास्ते तत्र च। स च प्रतिपत्ता द्विविध, ऋद्धिमान् अनृद्धिकश्च तत्र ऋद्धिमान् साधुसमीपे यदा करोति तदायं विधिः—यदि कस्मादपि भयं नास्ति, केनचिद्वादो नास्ति, ऋणं वा न धारयति, तदा स्वगृहेऽपि सामायिकं कृत्वा पञ्चसमितिसमितस्त्रिगुप्तिगुप्तः साध्वाश्रयं गत्वा साधून्नमस्कृत्य सामायिकं करोति 'करेमि भंते सामाइयं सावज्जं जोगं पच्चक्खामि, जाव साहू पज्जुवासामि, दुविहंतिविहेणं' इत्यादि । एवं कृतसामायिक ईर्यापथिकायाः प्रतिक्रम्य पश्चादागमनमालोच्य यथाज्येष्ठमाचार्यादीन् वन्दते, पुनर्गुरुं वन्दित्वा प्रत्युपेक्ष्य निविष्टः श्रृणोति पठति पृच्छति वा । एवं जिनभवनादिष्वपि, केवलं तत्रागमनं नास्ति, यस्तु महर्धिकः सोऽकृतसामायिक एव सर्वविभूत्या तीर्थं प्रभावयन् जिनालयं साधुवसतिं वा गच्छति । आगतश्चासौ सामायिकं करोतीत्यादि पूर्ववत् । स च सामायिकं कुर्वन् मुकुटं कुण्डले नाममुद्रां पुष्पं तांबूलं प्रावरकादि व्युत्सृजतीति ॥ ९ ॥

दिग्व्रतप्रतिपन्नस्य दिक्परिमाणस्य दिवारात्रौ प्रहरादौ च सङ्क्षेपणं देशावकाशिकं, शेषव्रतविषयसङ्क्षेपणमप्यत्र द्रष्टव्यं, तत्सङ्क्षेपस्याप्यवश्यं कर्तव्यत्वादिति १० । अष्टमीचतुर्दशीपूर्णिमामावास्यासु देशतः सर्वतो वा आहारशरीरसत्काराब्रह्मचर्यकुव्यापारपरिहारः पौषधव्रतं, तत्राहारपौषधो देशतो विवक्षितविकृतेरविकृतेराचामाम्लस्य वा सकृदेव द्विरेव



॥४९॥

र्वा भोजनमिति। सर्वतस्तु चतुर्विधस्य अहोरात्रं यावत्प्रत्याख्यानम्, शरीरसत्कारपौषधश्च देशतः स्नानादेः शरीरसत्कारस्यैकतरस्याकरणं, सर्वत्रस्तु सर्वस्यापि, अब्रह्मचर्यपौषधोऽपि देशतो दिवैव रात्रावेव वा, सकृदेव द्विर्वा स्त्रीसेवां मुक्त्वा ब्रह्मचर्यकरणं, सर्वतस्तु अहोरात्रं यावदब्रह्मचर्यपालनम्। कुव्यापारपौषधस्तु देशत एकतरस्य कस्यापि कुव्यापारस्याकरणं, सर्वतस्तु सर्वेषामपि गृहकर्मादीनामकरणम्।

इह च देशतः कुव्यापारनिषेधं यदा करोति तदा सामायिकं करोति वा न वा, यदा तु सर्वतः करोति तदा नियमात्करोत्येव, अकरणे तत्फलेन वञ्च्यते। सर्वतः पौषधं च पौषधशालादौ त्यक्तमौक्तिकमणिसुवर्णाद्यलङ्कारो व्यपगतमाल्यविलेपनवर्णकः परिहृतप्रहरणः प्रतिपद्यते ११। न्यायागतानां प्रासुकैषणीयानामशनपानखाद्यस्वाद्यानां वस्त्रपात्रोपाश्रयादीनां चातिथेः साधोः सङ्गतो देशकालश्रद्धासत्कारादिक्रमयुक्त आत्मानुग्रहबुद्ध्या विभागो दानमतिथिसंविभागो द्वादशं व्रतम्। यदुक्तं—साहूण कप्पणिज्जं जं नवि दिन्नं कहिंवि किंचि तहिं। धीराजहुत्तकारी सुसावगा तन्न भुंजंति ॥ १ ॥ वसहीसयणासणभत्त——पाणभेसज्जवत्थपायाई। जइवि न पज्जत्तधणो थोवावि हु थोवयं देइ १२।

एतानि सातिचाराणि न सम्यगित्यमीषु भोगोपभोगव्रतवर्जं पञ्चपञ्चातिचाराः परिहर्तव्याः। भोगोपभोगव्रते तु विंशतिः। तत्र प्रथमव्रते तावदमी—अतिक्रोधादिभिर्बन्धो वधश्छविच्छेदोऽतिभारारोपणं भक्तापाननिरोधश्चेति। तत्र क्रोधाद् बन्धो गोमनुष्यादीनां प्राणापहाणनिरपेक्षं रज्जुदामनकादिना नियमनं, न पुनर्यत्पुत्रादीनां विनयग्रहणार्थं चतुष्पदानां च रक्षार्थं यतनया क्रियते १, वधो लकुटकशादिना निर्दयताडनं क्रोधादेव, न पुनर्यद्व्रतसापेक्षं शिक्षा।र्थं यत

नया पुत्राश्वादीनां लतादवरकादिना सकृद् द्विस्त्रिर्वा ताडनमिति २। छविस्त्वक् शरीरं वा, तस्यां छेदः क्रोधाल्लोभाद्वा द्विपदचतुष्पदानां हस्तपादकर्णनासिकाछेदकर्णपाटनपृष्ठकर्तनादि, न पुनश्चिकित्सार्थं गण्डपादवल्मीकोपहतपादादिच्छेदनमिति।

अधिकस्य वोढुमशक्यस्य भारस्यारोपणं क्रोधाल्लोभाद्वा, गोकरभरासभमनुष्यादेर्वहनाय यावन्तमेव सपराक्रमं वोढुं क्षमस्तावानेव भारोऽध्यारोप्य इत्यर्थः। भक्तादिनिरोधश्च क्रोधान्निर्दयं भृत्याधमर्णादीनां, ज्वरितादीनां तु रोगचिकित्साहेतुत्वान्न दुष्यतीति ५. ननूपासकेन हिंसैव प्रत्याख्याता ततो वन्धादौ क इव दोषः? सत्यं, हिंसाहेतुत्वतस्तेऽपि प्रत्याख्याता एव. न चैवं सति व्रतभङ्ग एव, यतो द्विविधं हि व्रतमन्तर्वृत्त्या वहिर्वृत्त्या च। तत्र यदा कोपाद्यावेशान्निर्दयं वन्धादौ प्रवर्तते तदा विरत्यनपेक्षप्रवृत्तेरन्तर्वृत्त्या व्रतभङ्गो हिंसाया अभावाच्च वहिर्वृत्त्या पालनमिति देशस्य भञ्जनादेशस्य पालनाच्चातिचारव्यपदेशः। एवमुत्तरेष्वपि भावना, वन्धादयश्चेहोपलक्षणमभिचारमन्त्रतन्त्रप्रयोगादयोऽप्यतिचारतया ज्ञेया एते प्रथमव्रते १। मृषावादे तु सहसाभ्याख्यानं रहोऽभ्याख्यानं स्वदारमन्त्रभेदो मृषोपदेशः कूटलेखकरणञ्चेति। सहसा अनालोच्याभ्याख्यानमसद्दोषाध्यारोपणं, यथा चौरस्त्वं पारदारिको वेत्यादि १, रहसा एकान्तेन हेतुभूतेनाभ्याख्यानं रहोऽभ्याख्यानम्, इदमुक्तं भवति—रहसि मन्त्रयमाणान् वीक्ष्यासत्संभावनयैवं वदति यदेते हीदं राजविरुद्धादिकं मन्त्रयन्ते, एतच्च हास्यक्रीडादिना ब्रूते, न त्वभिनिवेशेन, तथा सति हि व्रतभङ्ग एव. यदाह—

सहसाऽभक्खणाई जाणंतो जइ करेज्ज तो भंगो । जइ पुणणाभोगा--ईहिं तो होइ अइयारो ॥ १ ॥ स्वदाराणां मन्त्रो विश्रम्भभाषणं, तस्य भेदं प्रकाशनं, दारग्रहणं मित्राद्युपलक्षणम् । अस्य चानुवादरूपेण सत्यत्वेऽपि मन्त्रप्रकाशनेन लज्जादितः कलत्रादेर्मरणादिसम्भवेन तत्त्वतोऽसत्यत्वादतिचारता । मृषोपदेशो विवादादौ स्वयं परेण वान्यतरातिसन्धानोपायोपदेश, इह स्वयमेव वदतोऽन्यं शिक्षयतः किंचिद्व्रतसापेक्षत्वादतिचारता ४, कूटमसदभूतं तस्य लेखः कूटलेख, इह चासत्यभणनमेव प्रत्याख्यातमिदं तु लेखनमिति व्रतसव्यपेक्षत्वेनातिचार इति ५, अथ तृतीयव्रते स्तेनाहृतादानं १, तस्करप्रयोगो २, विरुद्धराज्यगमनं ३ कूटमानकरणं ४, तत्प्रतिरूपव्यवहारश्चेति ५, स्तेनैराहृतं कुङ्कुमवस्त्रादि तस्यादानं, तद्विक्राणक्रयेण मुधा वा कुर्वंश्चौर इति व्यपदिश्यते, यदाह--चौरश्चौरापको मन्त्री भेदज्ञः क्राणकक्रयी । अन्नदः स्थानदश्चैव चौरः सप्तविधः स्मृतः ॥ १ ॥ इत्थं व्रतभङ्गभयाद्वाणिज्यमेव करोमि न चौरिकामित्याशयेन व्रतसव्यपेक्षत्वादभङ्ग इति भङ्गाभङ्गरूपोऽतिचारः १, तस्करप्रयोगश्चौराणां हरणक्रियायां प्रेरणा, यथा किमधुना यूयं निर्व्यापारास्तिष्ठथ ? यदि वो भक्तादि नास्ति तदाहं तददामि, भवदानीतमोषस्य यदि विक्रायको नास्ति, तदाहं विक्रेष्यामीत्यादि, अत्रापि भङ्गसापेक्षताभ्यामतिचारता भावनीयेति २ ।

विरुद्धो निजदेशस्वामिनः परिपन्थी, तस्य राज्यं देशः कटकं वा, तत्र स्वस्वामिनो निषेधशासनमुल्लङ्घ्य गमनमिह च यद्यपि--सामीजीवादत्तं तित्थयरेणं तहेव य गुरुहिं । एयस्सा उ जा विरई अदिन्नादाणस्स सा विरई ॥ १ ॥ इत्यदत्तादानलक्षणयोगात् तत्कारिणां च चौर्यदण्डयोगेन व्रतभङ्ग एव, तथापि वाणिज्यमेवेदं मया कृतम्, न चौर्यमिति

भावनया व्रतसापेक्षत्वाल्लोके च चौरोऽयमिति व्यपदेशाभावादतिचारता ३। मानं कुडवादि पलादि हस्तादि, तस्य कूटत्वं हीनाधिकत्वं, हीनमानेन ददात्यधिकेन च गृह्णाति ४।

तस्य प्रस्तुतस्य व्रीह्यादेः प्रतिरूपं सदृशं, यथा व्रीहीणां पलञ्जिः, घृतस्य वसा तैलस्य मूत्रं, जात्यसुवर्णकर्पूरादीनां युक्तिसुवर्णकृत्रिमकर्पूरादिस्तेन व्यवहारः। व्रीह्यादिषु पलञ्ज्यादि प्रक्षिप्य तद्विक्रीणीत, एतौ च वञ्चनातः परधनग्रहणाद्भङ्गावेव, केवलं खात्रखननादिकमेव चौर्यं प्रसिद्धमियं तु वणिक्कलैव मया कृतेति भावनातोऽतिचाराविति ५। यद्वा पञ्चाप्यमी व्यक्तचौर्यरूपा एव, केवलं सहसानाभोगातिक्रमादिभिर्विधीयमाना अतिचारतया व्यपदिश्यन्ते ३॥

मैथुने पुनरपरिगृहीतागमनमित्वरपरिगृहीतागमनमनङ्गक्रीडापरविवाहकरणं कामे तीव्रभिलाषश्चेति ५. अपरिगृहीतायामप्यकुलाङ्गनायां गमनं, तस्या लोके परदारतया रूढेस्तत्कल्पनया परस्य भर्तुरभावेनापरदारत्वाच्चातिचारः १। इत्वरकालं या परेण भाट्यादिना परिगृहीता वेश्या तस्यां गमनं, कथंचित्परदारत्वात्तस्या लोके परदारत्वारूढेश्च द्वितीयोऽतिचारः २। एतौ च परदारवर्जिन एव, न स्वदारसन्तोषिणः, शेषास्तु द्वयोरपि। यदाह--परदारवज्जिणो पंच हुंति तिन्नि उ सदारसंतुट्ठे। इत्थीए तिन्नि पंच च भंगविगप्पेहिं नायव्वा ॥१॥ अनङ्गः कामस्तत्सम्बद्धा क्रीडा अधरदशनालिङ्गनकुचस्पर्शादिका, निधुवनमेव व्रतविषयो नैषेति भावनया स्वदारसन्तोषिणो वेश्यादौ। परदारवर्जिनः परदारेष्वनङ्गक्रीडामाचरतोऽतिचारता ३।

परेषां स्वापत्यव्यतिरिक्तानां विवाहकारणं, कन्याफललिप्सया स्नेहसम्बद्धानां परिणयनविधानम्, इदं च द्विविधं

त्रिविधेन प्रतिपन्नस्थूलमैथुनव्रतस्य परविवाहकरणेऽर्थतो मैथुनकरणाद् व्रतभङ्ग एव । किन्तु तद्व्रती मन्यते विवाह एव मया विधीयते न मैथुनं कार्यते इति सापेक्षत्वादतिचारता । न च वाच्यं स्वापत्यविवाहेऽपि समानमेतदिति, यतस्तदकरणे तेषां स्वच्छंदचारित्वेन शासनोपघातादयो दोषाः स्युरिति । कामे तीव्रभिलाषस्त्यक्तान्यकृत्यस्याहर्निशं तदेकाग्रता सुरतावसरे च तीव्ररागतया विविधाः कुचेष्टाः, श्रावको हि वेदोदयोपशान्त्यर्थमात्रं मैथुनं सेवते । मैथुनमात्रादेव चोपशान्तौ सम्भवत्यां तीव्रकामाभिलाषोऽर्थतः प्रतिषिद्धोऽतः प्रतिषिद्धाचरणाद्भङ्गः, नियमानाबाधया चाभङ्ग इति भङ्गाभङ्गरूपोऽतिचार ५ ।

स्त्रियास्तु स्वपुरुषसन्तोषपरपुरुषवर्जनयोर्न भेदः, स्वपुरुषव्यतिरेकेणान्येषां परपुरुषत्वाद् , अनङ्गक्रीडादयस्तु त्रयः स्युः पञ्च वा, कथं ? तत्राद्योऽतिक्रमादिना परपुरुषमभिसरन्त्याः । द्वितीयः सपत्नीवारके स्वपतिं परिभुञ्जानायाः, शेषाः प्राग्वदिति ॥४॥ परिग्रहव्रते तु योजनात् क्षेत्रवास्तुप्रमाणातिक्रमः १, प्रदानाद्रूप्यसुवर्णप्रमाणातिक्रमः २. बन्धनाद्धनधान्यप्रमाणातिक्रमः ३, कारणाद् द्विपदचतुष्पदप्रमाणातिक्रमः ४, भावात् कुप्यप्रमाणातिक्रमश्चेति ५, तत्र कृतक्षेत्रवास्तुप्रमाणस्याधिकतराभिलाषे व्रतभङ्गभयात् प्राक्तनक्षेत्रादेरासन्नमपरं गृहीत्वा तस्यैकत्वकरणाय सीमावृत्ति-वरण्डाद्यपनयनेन तत्तत्र योजयतः प्रथमातिचारः १ । चतुर्मासाद्यवधिकृतस्वर्णरूप्यप्रमाणस्य कुतश्चिदधिकसम्पत्तौ पूर्णेऽवधौ पुनर्गृहीष्यामीति बुद्ध्या व्रतसापेक्षत्वादन्यस्मै ददतो द्वितीयः २ । प्रतिपन्नधनधान्यप्रमाणस्य तदधिकला-भसम्भवे व्रतभङ्गभयादुद्गृहगतधनादि विक्रये कृते गृहीष्यामीति भावनया बन्धनान्मूटकादिरूपात्सत्यङ्कारदानादि-रूपाद्वा स्वीकृत्य परस्यैव गृहे स्थापनतस्तृतीयः ३ ।

अङ्गीकृतद्विपदचतुष्पदप्रमाणस्य गोमहिषीवडवादेर्विवक्षितकालादर्वागेव प्रसवे आधिक्याद् व्रतभङ्गः स्याद् इति कियत्यपि काले गते गर्भस्य कारणाद् गर्भस्थगवादिभावेन वहिस्तदभावेन च कथंचिद् व्रतातिक्रमाच्चतुर्थः ४. कुप्यस्य या संख्या यथा किल दश कच्चोलकानि मुत्कलानि, तस्या आधिक्यसम्भवे व्रतभङ्गभयाद्भावेन पर्यायान्तरेण भञ्जयित्वा वहुभिरपि दशैव कारयतः सङ्ख्यापूरणात्स्वाभाविकसङ्ख्याबाधनाच्च पञ्चमः ५ इत्यणुव्रतातिचारा इदानीं गुणव्रतेषु, तत्र दिग्विरतिव्रते ऊर्ध्वाधस्तिर्यग्दिक्प्रमाणातिक्रमाः ३ क्षेत्रवृद्धिः ४ स्मृत्यन्तर्धानं चेति ५ । आद्यास्त्रयः सुबोधा एव, नवरसूर्ध्वादिदिशां गमनमाश्रित्य प्रमाणातिक्रमोऽतिचारोऽनाभोगादिनातिक्रमादिना वा ३ क्षेत्रवृद्धिश्चैवं—

किल केनचित्सर्वदिक्षु योजनशतं दिग्व्रतमङ्गीकृतं, कदाचिच्च प्राच्यां वाणिज्यादिनासौ योजनशतमगमत्, ततोऽपि परतः प्रभूतलाभो भवितेत्यपरस्यां नवतिं यास्यामीति विकल्प्य दशयोजनानि पूर्वस्यां वर्धयतो व्रतसापेक्षस्यातिचारः ४ स्मृत्यन्तर्धानं विस्मृतेर्यथा पूर्वस्यां योजनशतं दिक्परिमाणं केनचित्कृतं, गमनकाले च स्पष्टतया न स्मरति, किं शतं परिमाणं कृतमुत पञ्चाशत्, तस्य चैवं पञ्चाशतमतिक्रामतोऽतिचारः, शतमतिक्रामतो भङ्गः सापेक्षत्वान्निरपेक्षत्वाच्चेति ५ भोगोपभोगव्रते, तत्र भोगव्रते तु भोजनतस्तावदमी पञ्च । तद्यथा—सचित्ताहारः सचित्तप्रतिवद्धाहारोऽपक्वौषधिभक्षणं चेति । एते च प्रत्याख्यातसचित्ताहारस्यैव द्रष्टव्या । तत्र सचित्ताहारः कन्दमूलफलादि, रयं चानाभोगातिक्रमादिना ज्ञेयः । सचित्तेन वृक्षादिना प्रतिवद्धो गोंदादिः पक्वफलादिर्वा सचित्तान्तर्बीजस्तस्याहारोऽनाभोगादिना, अथवा बीजं त्यक्ष्यामि कटाहं तु भक्षयिष्यामि, तस्याचेतनत्वादिति बुद्ध्या पक्वं खर्जूरादिफलं

मुखे प्रक्षिपतोऽतिचारः २ ।

अपक्वाया औषधेः कणिकादिरूपायाः सम्भवत्सचित्तावयवाया अपि पिष्टत्वादचेतनेयमिति सम्भावनया भक्षणम् ३ दुःपक्वाया वह्निना पक्वापक्वत्वेन सम्भवत्सचित्तावयवाया औषधेः पृथुकादेर्भक्षणम् ४. तुच्छास्तथाविधतृप्त्यजनकत्वेनासारा औषधयः कोमलमुद्गानि फलीरूपास्तासां भक्षणम् । आह--यद्येताः सचित्तास्तर्हि प्रथमातिचार एव, अथाचित्तास्तदा किं विरुद्धं ? सत्यं, तद्भक्षणे तथाविधतृप्त्यजनकत्वेन निरर्थकं जीवघातस्यैवावशिष्यमाणत्वादचेतनीकृत्याप्यासां भक्षणमर्थतः प्रतिषिद्धम् । ततः प्रतिषिद्धाचरणान्नियमाबाधनाच्चातिचारः, एवं रात्रिभोजनमद्यादिनिवृत्तिष्वप्यनाभोगादिक्रमादिभिरतिचारता भावनीया ५ एते पञ्च भोजनतः । कर्मतस्त्वमी--कर्मादानसंज्ञाः पञ्चदश श्लोकैः कथ्यन्ते, तद्यथा--

अङ्गार १ वन २ शकट ३--भाटक ४ स्फोटजीविका ५ । दन्त ६ लाक्षा ७ रस ८ केश ९--विषवाणिज्यकानि च १० ॥१॥ यन्त्रपीडं ११ निर्लाञ्छन १२--मसतीपोषणं १३ तथा । दवदानं १४ सरःशोष १५ इति पञ्चदश त्यजेत् ॥२॥ तत्र--अङ्गारभ्राष्ट्रकरणं कुम्भायःस्वर्णकारिता । ठठारत्वेष्टिकापाका--विति ह्यङ्गारजीविका ॥१॥ छिन्नाछिन्नवनपत्र-प्रसूनफलविक्रयः । कणानां दलनोत्पेषाद् वृत्तिश्च वनजीविका ॥२॥ शकटानां तदङ्गानां घटनं खेटनं

तथा । विक्रयश्चेति शकट——जीविका परिकीर्तिता ॥३॥

शकटोक्षलुलायोष्ट्र——खराश्वतरवाजिनाम् । भारस्य वाहनाद्वृत्ति——र्भवेद्भाटकजीविका ॥४॥ सरःकूपादिखनन——शिलाकुट्टनकर्मभिः । पृथिव्यारम्भसम्भूतै——र्जीवनं स्फोटजीविका ॥५॥ दन्तकेशनखास्थित्वग्——रोम्णां ग्रहणमाकरे । त्रसाङ्गस्य वाणिज्यार्थं दन्तवाणिज्यमुच्यते ॥६॥ लाक्षामनःशिलानीली——धातकीटङ्कणादिनः । विक्रयः पापलसनं लाक्षावाणिज्यमुच्यते ॥७॥ नवनीतवसाक्षौद्र——मद्यप्रभृतिविक्रयः । द्विपाच्चतुष्पाद्विक्रयो वाणिज्यं रसकेशयोः ॥८॥ विषास्त्रहलयन्त्रायो—हरितालादिवस्तुनः । विक्रयो जीवितघ्नस्य विषवाणिज्यमुच्यते ॥९॥ तिलेक्षुसर्षपैरण्ड—जलयन्त्रादिपीडनम् । दलतैलस्य च कृति—र्यन्त्रपीडा प्रकीर्तिता ॥१०॥ नासावेधोङ्कनं मुष्क—छेदनं पृष्ठगालनम् । गोकर्णकम्बलच्छेदो निर्लाञ्छनमुदीरितम् ॥११॥ सारिकाशुकमार्जार——श्वकुक्कुटकलापिनाम् । पोषो दास्याश्च वित्तार्थ—मसतीपोषणं विदुः ॥१२॥ व्यसनात्पुण्यबुद्ध्या वा दवदानं भवेद् द्विधा । सरःशोषः सरःसिन्धु—ह्रदादेरम्बुसम्प्लवः ॥१३॥ दिग्मात्रं चेदम्, एवंजातीयानां सावद्यकर्मणां न तु परिगणनमिति एतानि चानाभोगादिना अतिचारा आकुट्या क्रियमाणानि तु भङ्गा एव ।

इह चैवं विंशतिसङ्ख्यातिचाराभिधानं व्रतान्तरेष्वपि पञ्चातिचारसङ्ख्यया तज्जातीयानां विविधानां सङ्ग्रह इति ज्ञापनार्थम् । तेन स्मृत्यन्तर्धानादयो यथासम्भवं सर्वव्रतेषु द्रष्टव्याः ॥९॥ अनर्थदण्डविरतौ तु कन्दर्पः कौकुच्यं मौखर्यं संयुक्ताधिकरणता भोगोपभोगाधिक्यं चेति । कन्दर्पः कामः तद्धेतुस्तत्प्रधानो वाक्प्रयोगोऽपि कन्दर्पः, इह सामाचारी—



॥ ५७ ॥

श्रावकेण स्वस्य परस्य वा मोहोद्दीपकं न वाच्यम् । कौकुच्यं भ्रूनयनोष्ठनासाकरचरणमुखविकारैरनेकप्रकारा भण्डादिक्रिया, एतौ द्वावपि प्रमादाचरितस्यातिचारौ २ । मुखरो वाचाटस्तस्य कर्म मौखर्यमसभ्यासम्बद्धप्रलापित्वमयं च पापोपदेशस्यातिचारः ३ । अधिकरणं हलोदूखलशकटादि सयुक्तं फलादिसंयोगेन प्रगुणीकृतं तद्भावस्तथा श्रावकेण हि तत्संयुक्ताधिकरणं न धारणीयं, तथा सति हि यः कश्चिद्याचते, अन्यथा तु सुखेन परः प्रतिषेधयितुं शक्यते, हिंस्रप्रदानस्य चासावतिचारः ४ । भोगोपभोगाधिक्यं स्नानीयतैलामलकभोजनचन्दनकुङ्कुमकस्तूरिकावस्त्राभरणादीनामतिरिक्तानामारम्भः, प्रमादाचरितस्यायमतिचारः ५ । सर्वेऽप्यमी अनाभोगादिनैव क्रियमाणा अतिचारा, आकुट्या तु भङ्गा एव ६ । इति गुणव्रतातिचाराः ॥ अथ शिक्षाव्रतेषु, तत्र तावत्सामायिके मनोवाकायदुःप्रणिधानानि ३ स्मृत्यकरणमनवस्थितकरणं चेति । तत्र मनःप्रभृतीनां दुःप्रणिधानमनाभोगादिना सावद्यचिन्तादिषु प्रवर्तनं ४ स्मृतेरकरणं प्रबलप्रमादो नैवं स्मरति यदुतास्यां वेलायां सामायिकं कर्तव्यं कृतं न कृतं वेति, स्मृतिमूलं च मोक्षानुष्ठानम् । अनवस्थितकरणं यत्करणानन्तरमेव त्यजति, यथाकथञ्चिद्वा अनादृतः करोति ५ ॥९॥ देशावकाशिके पुनरानयनप्रयोगः प्रेष्यप्रयोगः शब्दानुपातो रूपानुपातो बहिः पुद्गलप्रक्षेपश्चेति । तत्र स्वयं गमने व्रतभङ्गः स्यादिति धिया परेण नियमितक्षेत्राद्बहिःस्थस्य पदार्थस्यात्मसमीपे प्रापणमानयनप्रयोगः १ । स्वयं गमने व्रतभङ्ग इत्याशयाद्विवक्षितक्षेत्राद्बहिः प्रयोजनाय प्रेष्यस्य व्यापारणं प्रेष्यप्रयोगः, देशावकाशिकव्रतं हि माभूद्गमनादिभिः प्राणिघात इत्याशयेन गृह्यते, स तु स्वयं कृतोऽन्येन वा कारित इति न कश्चित्फले विशेषः, प्रत्युत स्वयं गमने ईर्यापथविधेर्गुण इति २ । नियमविषयक्षेत्राद् बहिःस्थितं कञ्चननरं दृष्ट्वा

व्रतभङ्गभयादाह्वातुमशक्नुवन् यदा स्वकीयकासितादिशब्दश्रावणनिजरूपदर्शनव्याजेन तमाकारयति तदा शब्दानुपात रूपानुपातौ ४ व्रतविषयक्षेत्राद्वहि र्विवक्षितजनाकारणार्थं पुद्गलस्य लोष्टादेः क्षेपणं बहिःपुद्गलक्षेपः । इहाद्यौ द्वावव्युत्पन्नस्य, अन्त्यत्रयं तु मायाविनः । इह च दिग्व्रतसङ्क्षेपणवद् व्रतान्तराणामपि सङ्क्षेपकं देशावकाशिकं किन्तु प्राणातिपातादिसङ्क्षेपेषु वधबन्धादय एवातिचाराः । दिग्व्रतसङ्क्षेपे तु सङ्क्षिप्तत्वात् क्षेत्रस्यानयनप्रयोगादय इति १६॥

पौषधव्रते पुनरप्रत्युपेक्षाप्रमृज्य स्थण्डिलभुवमुच्चारप्रश्रवणखेलसङ्घाणकादीनामुत्सर्गः १ । अप्रत्युपेक्ष्याप्रमृज्य पीठ-फलकादीनामादाननिक्षेपौ २, अप्रत्युपेक्षाप्रमृज्य च संस्तारकन्यासः ३. स्मृत्यकरणमनवस्थितकरणञ्चेति ५ । स्पष्टाश्चेते, नवरं प्रत्युपेक्षणं चक्षुषा निरीक्षणं, प्रमार्जन रजोहरणवस्त्रप्रान्तादिना विशुद्धिकरणम् । इह चाप्रत्युपेक्षणेन दुःप्रत्युपेक्षणम-प्रमार्जनदुःप्रमार्जनं च सङ्गृह्यते । नञः कुत्सार्थस्यापि दर्शनादिति ११ ॥ अतिथिसंविभागव्रते तु सचित्तनिक्षेपः, सचित्तपिधानं कालातिक्रमः परव्यपदेशो मत्सरश्च । सचित्ते पृथिव्यादावदित्सया साधुदेयस्य वस्तुनो निक्षेपः स्थापनम् १. सचित्तेन कुष्माण्डफलादिना पिधानं स्थगनं २ । कालस्य साधूचितभिक्षासमयस्यातिक्रमोऽनागतमेव भिक्षाकालं लङ्घयित्वा वा भोजनकरणमित्यर्थः परस्यान्यस्य सम्बन्धीदं गुडखण्डादि, न मदीयमिति व्यपदेशो व्याजः । मत्सरोऽसहनं साधुभिर्याचितस्य कोपनमथवा स कश्चिद्रङ्कमात्रोऽपि ददाति, अहं तु किं ततोऽपि हीन इत्यहङ्कारो वा मत्सर इति ५ । अनाभोगातिक्रमादिभिश्चैतेऽतिचारा अन्यथा तु भङ्गाः । इत्युक्तो लेशतः सातिचारव्रतविषयो विस्तरस्त्वावश्यकादिभ्योऽवसेय इति गाथार्थः । अथ यतिधर्ममाह—

॥ ५९ ॥

॥ मूलम् ॥—खंती य मद्दवज्जव—मुत्ती तवसंजमे य बोधव्वे ।
सच्चं सोयं आकिं—चणं च बंभं च जइधम्मो ॥४॥

व्याख्या—–क्षान्तिः क्रोधनिग्रह श्चकार उत्तरपदसमुच्चयार्थः, 'खंतिएत्ति' पाठेसहार्थे तृतीया, मार्दवमस्तब्धत्वमार्जवम-कौटिल्यं, मुक्तिर्निर्लोभता, तदियता रागद्वेषाभाव उक्तः । यदवाचि वाचकेन—–मायालोभकषाय—–श्चेत्येतद्रागसंज्ञितं द्वन्द्वम् । क्रोधो मानश्च पुन—–द्वेष इति समास निर्दिष्टः ॥१॥ ततश्चानेन सामायिकमुक्तं भवति, रागद्वेषाभावरूपत्वात्तस्य । यदाह—–जो समो सव्वभूएसु तसेसु थावरेसु य । तस्स सामाइयं होइ इइ केवलिभासियं ॥१॥ तपो द्वादशविधमनशनादि, तदाभ्यां गाथाभ्यामवसेयम्—अणसणमूणोयरिया वित्तिसंखेवणं रसच्चाओ । कायकिलेसो संलीण—या य बज्झो तवो होइ ॥१॥ पायच्छित्तं विणओ वेयावच्चं तहेव सज्झाओ । झाणं उसग्गोवि य अब्भिंतरओ तवो होइ ॥२॥ विनेयानुग्रहायानयोः किंचिद्व्याख्यानमुच्यते—–

तत्रानशनमाहारत्यागस्तच्चेत्वरं यावत्कथिकं च, तत्रेत्वरं चतुर्थादि षड्मासान्तम् । यावत्कथिकं तु भक्तपरिज्ञेङ्गिनीपादपोगमनभेदात् त्रिधा, तत्राद्यं सप्रतिकर्मत्रिविधचतुर्विधाहारत्यागनिष्पन्नं, द्वितीयं त्वप्रतिबद्धकर्मचतुर्विधाहार-त्यागनिष्पन्नमिङ्गितदेशे चङ्क्रमणाद्यपरिहारवत्, तृतीयमपि तथैव, नवरं सर्वथा परिस्पन्दवर्जनवद् उनोदरिका, इह द्वात्रिंशत्कावलिकमाहारप्रमाणं, तत एकेनापि कवलेन न्यूनमूनोदरता, तथाहि—बत्तीसं किल कवला आहारो कुच्छि-पूरओ भणिओ । पुरिसस्स महिलियाए अठावीसं भवे कवला ॥ १ ॥ अप्पाहार १ अवड्ढा २ दुभाग ३ पत्ता ४ तहेव

किंचूणा । ५ अठ १ दुवालस २ सोलस ३ चउवीस ४ तहेकतीसा ५ य ॥ २ ॥ वृत्तिसङ्क्षेपणं गृहभिक्षादिपरिमाणकरणं, रसपरित्यागो रसानां दुग्धदध्यादीनां सर्वेषामन्यतरेषां वा त्यागः, कायक्लेशः केशोत्पाटनवीरासनादिविधानशीतादिसहनादि, संलीनता विशृङ्खलमनोवाक्कायसंवृत्तिः, प्रायो बाह्यस्यैव शरीरस्य तापनाल्लौकिकैरपि तपस्तया प्रतीयमानत्वाच्च बाह्यं तपो भवतीति तथा प्रायश्चित्तमालोचनादि दशविधं, विनयकर्म विनयहेतुर्गुर्वादिष्वभ्युत्थानाञ्जल्यासनदानादिरूपः प्रतिपत्तिविशेषः, वैयावृत्त्यमाचार्यादीनां दशानां भक्तादिभिरुपष्टम्भो यदाह--

आयरिय १ उवज्झाए २ थेर ३ तवस्सी ४ गिलाण ५ सेहाणं ६ । साहम्मिय ७ कुल ८ गण ९--संघ १० संगयंतमिह कायव्वं ॥ १ ॥ तथैवेति समुच्चये, स्वाध्यायः पञ्चधा वाचनादि ध्यानमार्त्तादि चतुर्धा, तत्राद्ययोर्भवहेतुत्वादितरयोश्च मुक्तिहेतुत्वाद्धर्म्यशुक्ले एव तपः । उत्सर्गस्त्यागः, स च द्रव्यतो गणशरीरोपध्याहारभेदाच्चतुर्धा, भावतस्तु क्रोधादित्यागरूपत्वादनेकधा, अपि चेति समुच्चये, कर्मनिर्जरणंप्रत्यन्तरङ्गत्वादभ्यन्तरकं तपो भवति । तथा संयमः सप्तदशभेद स्तथा च--पुढविदगअगणिमारुय--वणस्सइबितिचउपणिंदिअजीवे । पेहोपेहपमज्जण--परिठवणमणोवई काए ॥ १ ॥ अस्या अर्थः--पृथिव्यादिपञ्चेन्द्रियान्तानां जीवानां मनोवाक्कायैः करणकारणानुमतितः संघट्टनपरितापनोपद्रवणपरिहाररूपो नवविधः संयमो भवति ९ । अजीवसंयमस्तु पुस्तकाप्रत्युपेक्ष्य दुःप्रत्युपेक्ष्यदुष्यतृणचर्मपञ्चकहिरण्यादीनामग्रहणरूपः स्तत्र--गंडीकच्छविमुठी सपुडफलए तहाछिवाडीय । एयं पुत्थयपणयं वक्खाणमिणं भवे तस्स ॥ १ ॥ बाहल्लपुहुत्तेहिं गंडीपुत्थोउ तुल्लगो दहो । कत्थवि अंते तणुउ मज्झे पिहुलो मुणेयव्वो ॥ २ ॥ चउ-



॥६१॥

रंगुलदीहो वा वट्टागिइमुठिपुत्थगो अहवा । चउरंगुलदीहोच्चिय चउरंसो होइ विन्नेओ ॥३॥ संपुडमो दुगमाई फलगा-वुत्थं छिवाडिमित्ताहे तणुपत्तूसियरूवो होइ छिवाडी बुहा बिंति ॥ ४ ॥ दीहो बाहल्लो वा जो पिहुलो होइ अप्प-बाहल्लो । तं मुणिय समयसारा छिवाडिपुत्त भणंतीह ॥ ५ ॥ अप्पडिलेहीय दूसे नूली इवहाणगं च नायव्वं । गंडु-वहाणालिंगणि मसूरए चेव पुत्तमए ॥६॥ पल्हविको य विपावार नवतपहनयदाढिगालीय । दुप्पडिलेहियदूसे एयं बीयं भवे पणगं ॥ ७ ॥ पल्हविहत्थच्छूरणं कोयवओ रूपपूरिओ पडओ । दढगालिधोयपुत्ती सेस पसिद्धा भवे भेया ॥८॥

अत्र वृद्धसंप्रदायः--

हत्थच्छुरणं खुरणं खुरडं १ कोयवओवूरठिगा.२ पावारोसलमपडउ ३ नवउजीणं ४ दढगालीधोलपुत्ती सदसवत्थत्ति भाणियं होइ ५ तणपणगं पुण भणियं । जिणेहिं कम्मठगंठिमहणेहिं । सा लीवीहीकोद्दव--रालगरत्ततणाइं च ॥ ९ ॥ अयएलगाविमहिसी मिगाणमजिणं च पंचमं होइ । तलिगाखल्लगवप्भे । कोसगडुत्तीयबीयं तु ॥ १० ॥ ग्रहणेऽपि संयम एव, यदाइ--दुप्पडिलेहियपणगं अद्धाणाई विवित्तगिह्णत्ति । घिप्पइ पुत्थयपणयं कालियनिज्जुत्तिकोसट्ठा ॥११॥ अपवादतस्तु पुस्तकपञ्चकादि १० । प्रेक्षासंयमः प्रत्युपेक्ष्य प्रमृज्य च स्थाननिपदनादिविधानम् ११ उपेक्षासंयमस्तु द्विधा व्यापारे अव्यापारे च, तत्र व्यापारोपेक्षासंयमो यत्सांभोगिकसाधून् सीदत इतरांश्च प्रावचनिककार्येषु प्रेरयति, अव्या-पारोपेक्षासंयमस्तु यत्सावद्यकर्मसु सीदन्तं गृहस्थमुपेक्षते १२ प्रमार्जनासंयमः पुनर्यत्सागारिकसमक्षं पथि गच्छन् वसतौ वा प्रविशन् पादौ न प्रमार्ष्टि, तदभावे च प्रमार्ष्टि १३ परिष्ठापनासंयमस्तु जीवसंसक्ताधिकानेषणीयक्षेत्रकालातिक्रान्त-

भक्तपानकादेरुच्चारप्रश्रवणनिष्ठीवनादेश्च विधिना त्यागः १४। मनःसंयमः पुनस्तस्यैवाकुशलस्य निरोधः, कुशलस्य चोदीरणम् १५ एवं वाक्संयमोऽपि १६ कायसंयमस्तु सति कार्ये उपयोगतो गमनागमनादिविधानम् तदभावे संवृत्तकरचरणाद्यवयवस्यावस्थानमिति १७

अथ प्रकृतमभिधीयते—इह च केषुचित्पदेषु प्राकृतवशाद् विभक्तिलोपो दृष्टव्यः। यदिवा संयमशब्दान्तः समाहारो द्वन्द्वः, मुक्तिशब्दस्य च दीर्घत्वं प्राकृतप्रभवं बोधव्यमित्यग्रेऽपि संभोत्स्यते। सत्यं सम्यग्वादः, शौचं द्रव्यतो निर्लेपता, भावतोऽनवद्यसमाचारः, स चेह प्रस्तावादस्तेयलक्षणः। किञ्चनं द्रव्यमुच्यते, नास्य किञ्चनमस्तीत्यकिञ्चनस्तस्य भाव आकिञ्चन्यं निर्ग्रन्थतेत्यर्थः। अथ मुक्तिशब्देनैव गतार्थमिदमिति चेन्न, संयमार्थं निर्लोभस्य वस्त्रपात्रकम्बलादि धारयतोऽपि आकिञ्चन्यप्रतिपादनार्थत्वादस्य, यदाह—जंपि वत्थं व पायं वा कंबलं पायपुंछणं। तंपि संजमलज्जट्ठा धारिंति परिहरंति य ॥ १ ॥

न सो परिग्गहो वुत्तो नायपुत्तेण ताइणा। मुच्छापरिग्गहो वुत्तो इइ वुत्तं महेसिणा ॥ १ ॥ ब्रह्म ब्रह्मचर्यं नवब्रह्मगुप्तिसनाथब्रह्मचर्यपरिपालनमित्यर्थः। चकारः समुच्चयार्थः। यतेरनगारस्य धर्मो यतिधर्मो बोधव्यः। इह च संयमादिभिः पदैर्महाव्रतप्रतिपादनेन सकलसावद्यव्यापारप्रत्याख्यानमित्युक्तं भवति, ततः सामायिकपुरस्सरमहाव्रतप्रतिपादनेन सम्पूर्णो यतिधर्मः प्रोक्तो भवति, तपःप्रतिपादनात्तु पूर्वार्जिताशुभकर्मनिर्जरणाशुद्धिरभिहितेति कृतं प्रसङ्गेनेति गाथार्थः ॥ ४ ॥ गृहियतिभेदाद् द्वेधाप्युक्तो धर्मोऽधुना तद्दायकग्राहकयोरल्पत्वमाह—

॥ मूलम् ॥—रयणत्थिणोवि थोवा तद्दायारो य जहेव लोगम्मि ।
इय सुद्धधम्मरयण—त्थिदायगा दढयरं नेया ।५॥

व्याख्या—रत्नानि वैडूर्यादीनि, तान्यर्थयन्ते ते रत्नार्थिनः स्तोका अल्पास्तत्प्रयोजनमूल्यपुण्यवतामल्पत्वात् तेषां रत्नानां दातारो विक्रेतारः स्तोका इति योगः । विनिमयाभावाद् अपिशब्दौ परस्परसमुच्चये, यथैव लोके प्रजासु इत्यनेन प्रकारेण शुद्धः सर्वज्ञप्रणीतत्वेनाश्रद्धेयतासद्भूतत्वपूर्वापरविरोधित्वादिकलङ्करहितः, स चासौ धर्मश्च, स एव सकलसमीहितार्थसाधकत्वाद्रत्नं चिन्तामणिस्तस्यार्थिनो दायकाश्च दढतरमत्यर्थं स्तोका इति योगो ज्ञेया बोधव्याः, इदमत्र हृदयं—यथा तृणेन्धनकणलवणाद्यसारद्रव्याणां ग्राहका दातारश्च प्रभूताः प्राप्यन्ते, तत्प्राप्तेरनायासलभ्यत्वात्, तथैव कुधर्मस्य ग्राहिणो दायिनश्च प्रभूततमास्तथाविधभवाभिनन्दिनां भूयस्त्वादिति गाथार्थः ॥ ५ ॥ अथ धर्मरत्नयोग्यं निरूपयन् गाथात्रयमाह—

॥ मूलम् ॥—धम्मरयणस्स जोगो अक्खुद्दो रूवमं पगइसोमो ।
लोयप्पिओ अकूरो भीरू असठो सुदक्खिन्नो ॥६॥
लज्जालुओ दयालू मज्झत्थो सोमदिट्ठि गुणरागी ।
सक्कह सुपक्खजुत्तो सुदीहदंसी विसेसन्नू ॥७॥
वुड्ढाणुगो विणीओ कयणुओ परहियत्थकारी य ।
तह चेव लद्धलक्खो इगवीसगुणेहिं संजुत्तो ॥८॥

व्याख्या—धर्मरत्नस्य योग्य उचितोऽक्षुद्राद्येकविंशतिगुणैर्युक्तो भवतीति समुदायार्थः। तत्र क्षुद्रस्तुच्छो, न तथा, गंभीराशय इत्यर्थः, तस्य हि अलब्धमध्यत्वेन धर्मं प्रति क्षोभयितुमशक्यत्वाद् १ रूपवानहीनपञ्चेन्द्रियः सुप्रमाणसर्वावयवसम्पन्नो वा तस्यापि धर्मप्रभावकत्वात्, तथा च—धम्मोदएण रूवं करेति रूवस्सिणोवि जइ धम्म। गम्भवओ य सुरूवो पसंसिमो तेण रूवंति ॥१॥ गम्भवओ ग्राह्यवाक् प्रकृतिसोमः स्वभावेनैव सुधांशुवदानन्दकारी ३. लोकानां विशिष्टजनानां विनयादिगुणैः प्रियो वल्लभः, को हि गुणवतःप्रति प्रीतो न भवति? यस्तु न लोकप्रियः स न केवलमात्मानं, स्वस्य धर्मानुष्ठानमपि परैर्दूषयन् परेषां बोधिलाभभ्रंशहेतुर्भवति ५. क्रूरो दुरभिसन्धिर्न तथा अद्रोहक इत्यर्थः ५. भीरुर्जनापवादात्पापेभ्यो वा भयवान् ६. शठो मायावी, न तथा, सरलाशय इत्यर्थः ७, सुष्ठु दाक्षिण्यमस्य सुदाक्षिण्योऽत्यन्तोपरोधशीलः ८, लज्जा वैयात्याभावः, सा विद्यते यस्य स लज्जालुः, स हि प्राणप्रहाणेऽपि न प्रतिज्ञामुपजहाति। यदाह—लज्जां गुणौघजननीं जननीमिवार्या—मत्यन्तशुद्धहृदयामनुवर्तमानाः। तेजस्विनः सुखमसूनपि सन्त्यजन्ति सत्यस्थितिव्यसनिनो न पुनः प्रतिज्ञाम् ॥ १ ॥ ९, दया दुःखितजन्तुत्राणाभिलाषः, सा विद्यते यस्य स दयालु, धर्मस्य दया मूलमिति ह्यामनन्ति सूरयः १०. मध्यस्थ आयव्ययतुलनेन समयोचितकारी, यदिवा रागद्वेषयोरन्तराले तिष्ठतीति मध्यस्थ स्तस्यैव धर्मयोग्यत्वाद् यदाह—रत्तो दुट्ठो मूढो पुव्विं कुग्गाहिओ य चत्तारि। एए धम्मस्सणरिहा अरिहो पुण होइ मज्झत्थो ॥ १ ॥ सोमे शान्ते परवृद्धिदर्शनेऽप्यदृष्टविकारे दृष्टी लोचने यस्य स तथा, न परवृद्धिवद्धमत्सर इति १२.



॥ ६५ ॥

गुणेषु सौजन्यौचित्यादिषु रागी, रागस्तु बहुमानप्रशंसासाहाय्यकरणादिनानुकूला प्रवृत्तिः, गुणानुरागिणो हि जीवा अवन्ध्यपुण्यबीजनिषेकेणेहामुत्र च गुणग्रामसम्पदमारोहन्ति १३. सती शोभना परपरिवादात्मोत्कर्षरहिता कथा वचनपद्धतिः सत्कथा, शोभनः प्रत्यक्षलोकाद्यविरुद्धः पक्षः प्रतिज्ञा सुपक्षः, ताभ्यां युक्तः समेतः १४. सुतरामतिशयेन दीर्घकालभावित्वाद्दीर्घमर्थमनर्थं च पश्यति पर्यालोचयतीत्येवंशीलः सुदीर्घदर्शी १५. वस्त्ववस्तुनोः कृत्याकृत्ययोः स्वपरयोश्च विशेषमन्तरं जानातीति विशेषज्ञोऽविशेषज्ञो हि पुरुषः पशोर्नातिरिच्यते । अथवा विशेषमात्मन एव गुणदोषाधिरोहणलक्षणं जानातीति विशेषज्ञः । यदाह—प्रत्यहं प्रत्यवेक्षेत नरश्चरितमात्मनः । किं नु मे पशुभिस्तुल्यं किं नु सत्पुरुषैरिति ॥ १ ॥ १६. वृद्धाः शीलज्ञानाभ्यां गुरवस्ताननुगच्छति सेवाञ्जल्यासनदानाभ्युत्थानादिभिराराधयतीति वृद्धानुगः, ते ह्येवमनुगम्यमाना नियमात्कल्पतरव इव सदुपदेशादिभिः फलन्ति १७. विनीतः पूर्वोक्तविनयसम्पन्नः, स चागर्वितया सदैव गुरुषु विनयं प्रयुञ्जानोऽनुत्तरां श्रुतादिसम्पदमासादयति, उक्तं च—विणयाओ नाण नाणाओ दंसणं दंसणाओ चारित्तं । चरणाहिंतो मुक्खो मुक्खे सोक्खं अणाबाहं ॥ १ ॥ १८. कृतं जानातीति कृतज्ञः स एव कृतज्ञकः, स हि स्तोकोपकारकारकमपि बहुमन्यते १९. परेषां हितार्थं समीहितप्रयोजनं तत्करोतीति परहितार्थकारी, परोपकारपरो हि पुमान् सर्वस्य नेत्रामृताञ्जनम् २०. चः समुच्चये, तथा तेन गुणस्वरूपलक्षणप्रकारेण, चैवेति समुच्चये, लब्धलक्षः प्रत्यासन्नमुक्तिगमनत्वेन सकलसत्क्रियासु प्राप्तकौशलः २१. गुणगुणिनोरभेदोपचारविवक्षयेत्थंभूतैकविंशतिगुणयुक्तो धर्मरत्नयोग्यो भवतीति योजितमेव. इह च धर्मलोकाबाधया एकद्वित्र्यादिगुणाभावेऽपि धर्मयोग्यत्वमुन्नेयमिति गाथा-

त्रयार्थः ॥ ८ ॥ इति श्रीदेवभद्राचार्यविरचिते दर्शनशुद्धिप्रकरणविवरणे द्वितीयं धर्मतत्त्वं समाप्तम् ॥ श्रीरस्तु ॥

व्याख्यातं द्वितीयं धर्मतत्त्वम् । अथ मार्गतत्त्वस्यावसरोऽस्य च पूर्वेण सहायं सम्बन्धः—पूर्वं गृहिधर्मो यतिधर्मश्च प्रत्यपादि, तत्र गृहिधर्मो द्रव्यस्तवमार्गानुपाती, यतिधर्मश्च भावस्तवमार्गानुपातीति प्रस्तावादुभयरूपमपि मार्गं प्रतिपिपादयिषुः शृङ्खलया तत्प्रस्तावनामाह—

॥ मूलम् ॥ —दुलहा गुरुकम्माणं जीवाणं सुद्धधम्मबुद्धीवि ।
तीए सुगुरु तमिवि कुमग्गठिइसकलाभंगो ॥ १ ॥

व्याख्या—दुर्लभा दुःप्रापा, गुरूणि क्लिष्टाध्यवसायजनितत्वेन स्थित्यादिभिर्महान्ति कर्माणि दर्शनचारित्रमोहनीयादीनि येषां ते, तथा तेषां जीवानां प्राणिनां, कासौ ? शुद्धधर्मबुद्धिरपि, तत्र शुद्धः प्रबलमोहावृतप्राणिनिस्तारकोऽसत्प्रवृत्तिकलङ्करहितः, स चासौ धर्मश्च, तत्र बुद्धिरभिप्रायः, शुद्धधर्मबुद्धिरास्तां कायेनानुष्ठानमित्यपेरर्थः, अथ कथंचिद्भवितव्यतायोगाज्जातायामपि तस्यां 'धम्मणु धम्मकत्ताय' इत्यादिवक्ष्यमाणलक्षणः सुगुरुर्दुर्लभ इति सर्वत्र सम्बन्धनीयम् । तदभावे तस्या अपि निष्फलत्वाद्, अथ कुतोऽपि कर्मविवरात्तस्मिन्नपि गुरावपि प्राप्ते इत्यर्थः, कुत्सितः शिवपुरप्रतिपन्थित्वेन मार्गः पन्था तस्य स्थितिर्व्यवस्था, सैव संसारचारकनिर्गमननिरोधकत्वेन सङ्कला लोहमयबन्धनं कुमार्गस्थितिसङ्कला, तस्या भङ्ग इव भङ्गोऽतिलङ्घनमित्यर्थः । इदमत्र हृदयं—यद्यपि कश्चिद्विशिष्टकर्मक्षयोपशमात्सद्गुरुसम्प्रयोगाच्च समुल्लसितविवेको विशुद्धधर्मोत्साहवान् भवति । तथाप्यन्तगुरुकर्मप्राग्भाराक्रान्ततया भवाभिनन्दिभिर्गौरव

त्रितयप्रतिबद्धैः प्रवर्तितस्वाभिप्रेताचारैरागमप्रतिपन्थिभिस्तथाविधमूढजनैः सदाचारविमुखप्रभूतजनमेलनेन बलादप्यसौ कुमार्गे व्यवस्थाप्यत इति गाथार्थः ॥१॥ प्रस्तावनापूर्वं कुमार्गमेवाह–तथाहीति निपातसमुदायोऽयमुपप्रदर्शने ॥

॥ मूलम् ॥— जिणभवणे अहिगारो जइणो गिहिणोवि गच्छपडिवद्धा ।
जह तह देयं दाणं सुविहियपासे वयनिसेढो ॥२॥

॥ मूलम् ॥ –जिणभवणबिंबपूया—करणं कारावणं जइणंपि ।
आगमपरंमुहेहिं मूढेहिं परूविओ मग्गो ॥ ३ ॥ युग्मम् ॥

व्याख्या–जिनभवनेऽर्हन्मन्दिरे, उत्तरपदस्थस्यापिशब्दस्येह सम्बन्धाद्यतेरपि त्रिधा नियमितसकलसावद्यव्यापारस्य साधोरपि, न केवलं गृहिणोऽधिकारस्तन्निवासतत्कर्मद्रव्यादिचिन्तकत्वलक्षण आगमपराङ्मुखैर्मूढैः प्ररूपितो मार्ग इति द्वितीयगाथान्ते सम्बन्धः । एवं सर्वत्र, गृहिणोऽपि सर्वारम्भभाजो गृहस्था अपि, न केवलं साधवः, किं ? गच्छप्रतिबद्धा विवक्षिताचार्यसन्तानवशवर्तिनः । यथातथा येन तेन कृतक्रीताहृतादिदोषवतापि प्रकारेण पात्रापात्राविचारणेन वा देयं दातव्यं दानं पिंडवस्त्रपात्रादि यतिभ्य इति गम्यं, सुष्टु लोकागमाबाधितं विहितमनुष्टानं येषां ते सुविहिताः सुसाधवस्तेषां पार्श्वेऽन्तिके व्रतनिषेधश्चारित्रप्रतिपत्तिप्रतिबन्धास्ते हि चैत्यनिवासात्तद्द्रव्यादिप्रभुत्वसामर्थ्येन राजवदाक्रम्य सहृदयमपि लोकं मुक्तमर्यादा यथाभिरुचितं व्यापारयन्ति, मुग्धजनप्रत्ययार्थं वदन्ति च– जा जस्स ठिइ जा जस्स संतइ पुव्वपुरिसकयमेरा । सो तं अइक्कमंतो अणंतसंसारिओ होइ ॥१॥

व्याख्यास्या—या यस्य साधोः स्थितिः प्रव्रजनकाले उपस्थापनकाले वा, आचार्योपाध्यायादिव्यवस्थाबन्ध इत्यर्थः । तथा या यस्य सन्ततिः सन्तानो वैरशाखाचान्द्रकुलादिस्तथा पूर्वपुरुषैश्चिरन्तनगीतार्थैः कृता विहिता या, यस्येत्यत्रापि सम्बन्धः । मेरत्ति मर्यादा द्रव्यक्षेत्रकालभावपुरुषप्रतिषेधरूपा, संहननधृत्याद्यपेक्षः कारणतः सूत्रातिरिक्तो जीतकल्पादिर्व्यवहारः, स तां रागादिकलुषिततया अतिक्रामन्ननन्तसंसारिको भवत्येव, तां च संयतव्यवस्थां सर्वारम्भप्रवृत्ते गृहस्थेऽपि मूढाः सम्बन्धयन्तीति कृतं प्रपञ्चेन, प्रकृतं प्रस्तुमः ॥२॥ तथा जिनानां भवनं च गृहं बिम्बं च प्रतिमापूजा चार्चा जिनभवनबिम्ब—पूजास्तासां करणं स्वयं स्वद्रव्येण परद्रव्येण वा निर्वतनं कारणं श्रुतत्वादेतासामेवान्यैर्विधापनं यतीनामपि, न केवलं गृहिणाम्, आगमपराङ्मुखैः सिद्धान्तप्रतिकूलैर्मूढैर्विषयकषायाकुलितमनोवृत्तिभिः प्ररूपितः प्रतिपादितो मार्गः स्वबुद्ध्या धर्मपथ इति गाथाद्वयार्थः ॥३॥ अथ कथमागमपराङ्मुखं प्ररूपितत्वमस्येत्युच्यते—

॥ मूलम् ॥—**समणाणं को सारो छज्जीवनिकायसंजमो एयं ।**
**वयणं भुवणगुरूणं निहोडियं पयडरूवंति ॥४॥**

व्याख्या—श्राम्यन्ति तपस्यन्तीति श्रमणाः साधवस्तेषां किं सारं किं प्रधान रहस्यमिति यावदित्याह—षड्जीवनिकायसंयमः, षट् च पृथिव्यप्तेजोवायुवनस्पतित्रसलक्षणास्ते जीवनिकायाश्च तेषां संयमो रक्षा, एतदिति प्रत्यक्षपरामर्शे वचन समयरूपं भुवनगुरुणामर्हतां निहोडितमधःकृतं, प्रकटरूपमपि स्पष्टस्वभावमप्ययमर्थः । ते हि सर्वप्रकारैर्जिनमन्दिरव्यापारमनुतिष्ठन्तोऽनेषणीयं भक्तपानादि च गृह्णन्तो गृहस्थांश्च मद्गच्छीया एते इति ममीकुर्वतोऽन्यदपि ज्योतिषनिमित्त-


॥६९॥

मन्त्रतन्त्रादि प्रयुञ्जानाः षड्जीवनिकायमुपमृन्दन्तः कथं भगवद्वचो नाथःकुर्वन्तीति गाथार्थः ॥४॥ अथ सुगृहीतनामधे-यैरार्यरक्षितैरनुज्ञातत्वाच्चैत्यनिवासस्य कथमागमपराङ्मुखप्ररूपितोऽयमभिधीयत इत्येतदनूद्य समाधिमाह—

॥ मूलम् ॥—मन्नंति चेइयं अज्ज— रक्खिएहिं मणुनायमिह केइ ।
ताणमयं मयबज्झं जम्हा नो आगमे भणियं ॥५॥

व्याख्या—मन्यन्ते अभ्युपगच्छन्ति केचिदाचार्याभासा इति सम्बन्धः, किं तत् ? चैत्यमार्यरक्षितैरनुज्ञातमिति वाक्यं कर्म, क्व ? इह यतिजनविषये निवासायेति प्रक्रमस्तेषामेव वादिनां मतमभ्युपगमो मताज्जिनशासनाद् बाह्यं बहिर्भूतं, यस्माद्धेतोरागमे सिद्धान्ते न भणितं चैत्यनिवासानुज्ञानमिति प्राकृतमिति गाथार्थः ॥५॥ तर्हि किं भणितमित्याह—

॥ मूलम् ॥—एयं भणियं समए इंदेणं साहूजाणणनिमित्तं ।
जक्खगुहाए दारं अणमुहं ठावियं तइया ॥६॥

व्याख्या—एतदभिधास्यमानं भणितमुक्तं समये आवश्यकनिर्युक्तिचूर्ण्यादिरूपे, किम् ? इन्द्रेण सौधर्माधिपेन साधूना-मार्यरक्षितशिष्याणां ज्ञापननिमित्तं यक्षगुहाया व्यन्तरनिवासरूपाया द्वारं मुखमन्यस्यां दिशि मुखं स्थापितं विहितं, न पुनश्चैत्यस्य, तदा तस्मिन् काले यदा तैस्तस्यां वसतिः कृतेति गाथार्थः ॥६॥ माभूत्तेषामनुज्ञा परमाधाकर्मादिदोषरहिते तत्र निवसतां का क्षतिरित्याह—

॥ मूलम् ॥--दुग्गंधमलीणवत्थस्स खेलसिंघाणजल्लजुत्तस्स ।
जिणभवणे णो कप्पइ जइणो आसायणाहेऊ ॥७॥

व्याख्या-दुर्गन्धान्यस्नानशरीरमलसम्पर्कान् मलिनानि बाह्यरजःसङ्गाद्वस्त्राणि यस्य स तथा तस्य, खेलश्च निष्ठीवनं; सिंघानश्च नासिकामलो, जल्लश्च देहमल उपलक्षणत्वादन्येऽपि तथाविधा वातनिसर्गादयो मनुष्यशरीरधर्मा अवरुद्ध्यन्ते तैर्युक्तो यः स तथा तस्य यतेर्जिनभवने न कल्पते स्थातुमिति गम्यं, कुतः ? आशातनाहेतोराशातनालक्षणात्कारणाद्, उक्तं च—दुब्भिगंधमलस्सावि तणुरप्पेसण्हाणि या । दुहओ वाहावावि तेण ठंति न चेइए ॥ १ ॥ जइवि न आहाकम्मं भत्तिकयं तह विवज्जयंतेहिं । भत्ति खलु होइ कय—इहारासायणा परमा ॥ २ ॥ आसायणमिच्छत्तं आसायणवज्जणाइ सम्मत्तं । आसायणानिमित्तं कुव्वइ दीहं च संसारं ॥ ३ ॥ न च वाच्यं भावार्हतां समीपे साधूनामवस्थानात् स्थापनार्हत्समीपावस्थानमपि न विरुद्ध्यते, यस्मादन्य एव भावार्हतां कल्पोऽन्य एव स्थापनार्हताम्, तथाहि—भावार्हतां सर्वसंवररूपदीक्षाङ्गीकारात् सर्वमेव तत्कृत्यं यतिभिरेव कार्यं, न गृहस्थैः, विरतिविराधनासम्भवाद् मज्जनमाल्यारोपादि च सावद्यं तेषां न विधीयते, तदुद्देशेन पाकादि च न किञ्चित्क्रियते । स्थापनार्हतां तु गृहस्था एव सर्वमनुतिष्ठन्ति, स्नपनादि च सर्वं विधीयते इति न तेषां सर्वसाम्यबुद्ध्या चैत्येऽवस्थातव्यमिति गाथार्थः ॥९॥ इत्थमुत्पथमुन्मथ्य प्रस्तुतमार्गं प्ररूपयन्नाह—

॥ मूलम् ॥—भावत्थयदव्वत्थय—रूवो सिवपंथसत्थवाहेण ।
सव्वन्नूणा पणीओ दुविहो मग्गो सिवपुरस्स ॥८॥

व्याख्या-भावः परमार्थः शुभाध्यवसायो वा, तेन तद्रूपो वा स्तवः स्तोतव्यपूजनमाराधनमिति हृदयम्, भावस्तवः द्रव्येण द्रव्यरूपो वा, भावस्तवकारणभूतः स्तवः प्रागवद्द्रव्यस्तवः । अनयोर्द्वन्द्वः, ततस्तौ रूपं स्वभावो यस्य स तथा, शिवस्य मोक्षस्य महापुरस्य वा पंथा मार्गस्तस्मिन् सार्थवाह इव सार्थवाहस्तेनशिवपथसार्थवाहेन, तस्य स्वरूपमाह—सर्वज्ञेन सर्वविदा, तदन्यप्रणयने विसंवाददर्शनात्, प्रणीतः प्ररूपितो द्विविधो द्वौ विधौ भणितस्वरूपौ प्रकारौ यस्य स तथा, मृग्यते परमसुखाभिलाषिभिरन्विष्यते, मृज्यते वा कर्ममलापनयनाद्विशोध्यतेऽनेनात्मेति मार्गः शिवपुरस्य मोक्षनगरस्य, अयमाशयः—यत्प्रयोजननिष्पत्तौ भावस्यैवालम्बनं मरुदेवास्वामिनीवत्, यच्च विदिततत्त्वस्य अविदिततत्त्वस्य वा भावेन क्रियासु प्रवर्तनं वैरस्वामिमाषतुषादिवत्, स द्विविधोऽपि भावस्तवमार्गः । तथा यद् द्रव्यत एवान्तःकरणशून्यतया गोविन्दवाचकादिवत्सदनुष्ठानं, यच्च द्रव्येण भरतादिवज्जिनभवनादिकरणं, स द्विविधोऽपि द्रव्यस्तवमार्ग इति गाथार्थः ॥८॥ अथ भावस्तवद्रव्यस्तवयोः स्वयमेव स्वरूपमाह—

॥ मूलम् ॥—जावज्जीवं आगम—विहिणा चारित्तपालणं पढमो ।
नायज्जियदव्वेणं बीओ जिणभवणकरणाइं ॥९॥

व्याख्या—यावज्जीवं यावत्प्राणधारणं, न परपरिकल्पितद्वादशवर्षादिकालावधिनेत्यर्थः । आगमो गणधरादिरचिता

शास्त्रपद्धतिस्तस्य विधिस्तेन सूत्रोक्तन्यायेनेत्यर्थः । अनेन स्वरुचिरचितानुष्ठानस्य निष्फलत्वमावेदयति । चारित्रं मूलोत्तरगुणानुरूपं तस्य पालनं रक्षणं सम्यग्विधानमिति यावत् । प्रथम आद्यो भावस्तवो भवतीति क्रिया, न्यायः स्वामिद्रोहविश्वसितवञ्चनचौर्यादिगर्ह्यार्थोपार्जनोपायभूतः स्वस्ववर्णानुरूपः सदाचारस्तेनार्जितं यद् द्रव्यं तेन न्यायार्जितधनेन जिनभवनादिकरणमेव श्रेयस्करं, न चान्यायार्जितेन धनेन जिनभवनादिकरणं मार्गानुयायीति सूचयति । एवं जिनभवनकरणादिरूपो द्वितीयो द्रव्यस्तवः । इह च यद्भावस्यैवालम्बनं भावस्तवः, द्रव्यत एव क्रियासु प्रवर्तनं द्रव्यस्तवश्च, तयोर्नाभिधानं तुच्छत्वादिति गाथार्थः ॥९॥ अथ जिनभवनकरणादिरिति पदं विवृणोति--

॥ मूलम् ॥--जिणभवणबिंबठावण—जत्तापूयाइ सुत्तओ विहिणा ।
दव्वत्थयत्ति नेयं भावत्थयकारणत्तेण ॥१०॥

व्याख्या--जिनस्यार्हतो भवनं च गृहं, बिम्बं च प्रतिमा, स्थापनं च प्रतिष्ठा, बिम्बस्यैव शोभनदिने प्रथमपूजा यात्रा च रथनिर्गमादिरूपा अष्टाह्निकादिका च, पूजा च पुष्पाद्यर्चनमादिर्यस्य जिनगुणगानन‍र्त्तनवाद्यवादनादेस्तज्जिनभवनबिम्बस्थापनायात्रापूजादिद्रव्यस्तव इति ज्ञेयमिति योगः । तच्च न यथाकथञ्चिदित्याह--सूत्रत आगममाश्रित्य, तदपि विधिना 'जहरेहइ तह सम्मं' इत्यादिना विधानेन द्रव्यस्तवो भावस्तवकारणभूत इति ज्ञेयम् । केन हेतुनेत्याह--भावस्तवकारणत्वेन चरणप्रतिपत्तिरूपभावस्तवहेतुत्वादिति गाथार्थः ॥१०॥ इह च कांश्चित् साध्वाभासान् द्रव्यस्तवेऽपि प्रवर्तमानानुपलभ्य कस्यचिदधिकारिशङ्का मा भूदिति द्रव्यस्तवस्य सावद्यत्वमाविर्भावयन् यतेरनधिकारितामाह--

॥ मूलम् ॥--छण्हं जीवनिकायाणं संजमो जेण पावए भंगं ।
तो जइणो जगगुरुणो पुप्फाईयं न इच्छंति ॥११॥

व्याख्या--षण्णां जीवनिकायानां संयमस्त्रिधा व्रतविरतिर्येन कारणेन प्राप्नोति लभते भङ्गं भ्रंशं, 'तोत्ति' ततो हेतोर्यतेरनगारस्य जगद्गुरवस्तीर्थकृतो नेच्छन्ति नानुजानन्ति पुष्पाण्यादिर्यस्मिंस्तत्पुष्पादिकमर्चनं, यदिवा पुष्पादिकं पूजार्थं हस्तेन गृहीतुमिति शेषः, सकलद्रव्यस्तवोपलक्षणं चेदं, उक्तं च--छज्जीवकायसंजमो दव्वत्थविसोविरुज्झई कसिणो । तो कसिणसंजमविओ पुप्फाईयं न इच्छन्ति ॥१॥ इति गाथार्थः ॥११॥ ननु सर्वसंवररूपसंयमवतापि दर्शनशुद्धिर्विधेया, सा च तीर्थकृत्पूजातो विशेषतः सम्भवति, तत्कथमसौ निषिद्ध्यते ? अत आह--

॥ मूलम् ॥--तं नत्थि भुवणमज्झे पूयाकम्मं न जं कयं तस्स ।
जेणेह परमआणा न खंडिया परमदेवस्स ॥१२॥

व्याख्या--पूर्वार्धं सुगमं, न वरमग्रे येनेति प्रयोगात्तेनेति सम्बध्यते, येन किं? येनेह भावस्तवविचारणायां परमा चासावाज्ञा च मनोवाक्कायशुद्ध्या सकलसत्त्वसंरक्षणपरा परमाज्ञा निरुपमशिनसुखसाधकत्वान्न खण्डिता नोल्लङ्घिता परमदेवस्य देवाधिदेवस्य तीर्थकृतः । इदमैदंपर्यं--यद्यपि साधुः पुष्पपूजादौ न प्रवर्तते तथापि सर्वप्रतिपत्तिमूलसर्वज्ञाज्ञापालनात् पूजादि विषये च देशनाद्वारेणोचितोपदेशादनुमोदनाच्चासौ दर्शनशुद्धिमान् भवत्येवेति गाथार्थः ॥१२॥ तदियता द्रव्यस्तवाद् भावस्तवो गरीयानिति निश्चितं, परमनयोः कियदन्तरमित्याह--

॥ मूलम् ॥—मेरुस्स सरिसवस्स य जित्तियमित्तं तु अंतरं होइ ।
भावत्थयदव्वत्थयाण अंतरं तित्तियं नेयं ॥१३॥

व्याख्या—निगदसिद्धा, नवरं 'भावत्थयदव्वत्थयाणत्ति' बहुवचनं प्राकृतप्रभवमिति ॥१३॥ अथ कुत एतदित्याह—

॥ मूलम् ॥—उक्कोसं दव्वत्थयं आराहिय जाइ अच्चुयं जाव ।
भावत्थएण पावइ अंतमुहुत्तेण निव्वाणं ॥१४॥

व्याख्या—प्रतीतार्था, नवरमपेर्गम्यमानत्वादुत्कर्षमपि तत्रोत्कृष्यत इत्युत्कर्षस्तं पर्यन्तसंलेखनासम्पन्ननिरतिचारद्वादशव्रतपरिपालनलक्षणमुक्तं चात्र—उववाओ सावगाण उक्कोसेण अच्चुयं जाव तथा 'अंतमुहुत्तेणत्ति' मरुदेवास्वामिनीवदचिन्त्यशक्तित्वाद्भावस्तवस्येति गाथार्थः ॥ १४ ॥ एवं च सति—

॥ मूलम् ॥—मोत्तूणं भावत्थयं जो दव्वत्थए पवट्टए मूढो ।
सो साहूवत्तत्थो गोयम अजओ अविरओ य ॥१५॥

व्याख्या—सुगमैव, केवलं मूढः कृत्याकृत्यविवेकविकलः । गौतम इति भगवान् वर्धमानस्वामी गौतमसगोत्रमिन्द्रभूतिमासन्त्रयते, अनेन चैतन्महानिशीथसूत्रं सूचयति, तथाहि—भयवं जे भावत्थयं गहीय दव्वत्थयं कुज्जा से किमालवेज्जा ? गोयमा ! असंजएइ वा अविरएइ वा अप्पडिहयपच्चक्खायपावकम्मेइ वा निद्धम्मेइ वा भट्ठपइन्नेइ वा देवच्चएइ वा देवभोएइ वेत्यादि । अयतः षट्कायविराधनेन संयमभ्रंशादविरतः, श्रावकोऽपि न लिङ्गधारित्वाद्, मार्गद्वयाद् भ्रष्ट इति

हृदयमिति गाथार्थः ॥ १५ ॥ मूढ इति यदुक्तं तद् दृष्टान्तेन दृढयन्नाह—

॥ मूलम् ॥—मंसनिवित्तिं काउं सेवइ दंतिक्कयंतिधणिभेया ।

इय चइऊणारंभं परववएसा कुणइ बालो ॥ १६ ॥

व्याख्या—मांसं पिशितं तस्य निवृत्तिं कृत्वा कश्चिदविवेकात्सेवते तदेव, कथं ? 'दंतिक्कयमिति' ध्वनिभेदाच्छ-
ब्दभेदेन, इय एवं त्यक्त्वा आरम्भे कम्मग्रहणे तज्जातीयग्रहणात्परिग्रहणं च परव्यपदेशाद्देवादिव्यपदेशेन करोति यतो
बालोऽज्ञस्तदुक्तं–चइऊण य घरवासं आरम्भपरिग्गहेसु वट्टंति । जं सन्नाभेएणं एयं अविवेगसामत्थं ॥१॥ यतः—पयईए
सावज्जं संतं नणु सव्वहा विरुद्धं तु । धणिभेयम्मिवि महुरग—सीयलगाइव्व लोयम्मि ॥ १ ॥ इति गाथार्थः ॥ १६ ॥
ननु कथमसौ बालो ? धर्मार्थितया चैत्यादिचिन्तायां प्रवर्तत इति यो मन्यते तमनुशासितुमाह—

॥ मूलम् ॥—तित्थयरुद्देसेण वि सिढिलिज्ज न संजमं सुगइमूलं ।

तित्थयरेणावि जम्हा समयंमि इमं विणिद्दिठं ॥ १७ ॥

व्याख्या—तीर्थकरोद्देशेनाप्यास्तामन्यथा, न शिथिलयेन्न ह्रासयेत्संयमं चारित्रं सुगतिमूलं प्रधानमपवर्गकारणं,
किमिति यस्मातीर्थंकरेणापि समये सिद्धान्ते इदं वक्ष्यमाणमर्थतो विनिर्दिष्टं कथितमिति गाथार्थः ॥ १७ ॥ तदेवाह—

॥ मूलम् ॥—सव्वरयणमएहिं विभूसियं जिणहरेहिं महिवलयं ।

जो कारिज्ज समग्गं तओवि चरणं महड्ढीयं ॥ १८ ॥

व्याख्या--रत्नैरङ्कादिभिर्निर्वृत्तानि रत्नमयानि, सर्वाणि च सकलानि तानि रत्नमयानि च सर्वरत्नमयानि, यदिवा सर्वरत्नैर्निर्वृत्तानि सर्वरत्नमयानि, दीर्घत्वं प्राकृतत्वाद् , एतैर्जिनगृहैर्विभूषितं मण्डितं महीवलयं, प्रतिग्रामं प्रतिनगरं च भरतादिपृथ्वीपीठं यः कश्चिदतिशायिसम्पद्भक्तिपुण्यप्राग्भारोपेतश्चक्रवर्त्यादिः कारयेत्समग्रं परिपूर्णं, ततोऽपि तस्मादपि सर्वोत्तमद्रव्यस्तवाच्चरणं सर्वविरतिस्वभावं महर्द्धिकं मेरुसर्षपोपमया गरीयः। आह च--कंचणमणिसोवाणं थंभसहस्सूसियं सुवन्नतलं। जो कारिज्ज जिणहरं तओवि तवसंजमो अहिओ ॥ १ ॥ अतस्तादृशद्रव्यस्तवाराधका अपि सर्वसंवररूपं भावस्तवमाराध्यैवाभिलषितार्थसाधका भवन्ति। ननु जिनयात्रामहोत्सवामारिघोषणमहादानादिप्रवृत्तिहेतुकत्वेन प्रवचनप्रभावनाप्रधानत्वाद् द्रव्यस्तव एव महर्द्धिको, यतः प्रवचनप्रभावनैव दर्शनसर्वस्वम्। तदुक्तं--

इदं दर्शनसर्वस्वमिदं दर्शनजीवितम्। सामर्थ्येन यदर्थेन क्रियते शासनोन्नति ॥१॥ रिति, अत्रोच्यते—प्रवचनप्रभावनाङ्गान्यपि जिनयात्रादीनि, षट्कायोपमर्दपुरस्सरं विधीयमानानि न तथाविधफलसाधनाय भवन्ति; षट्कायहितमेव चार्हन्तः प्रतिपादयन्ति। उत्कृष्टतपःश्रुतचारित्रधारिणश्च परमार्थतः प्रवचनप्रभावकास्तदुपदेशादेव च जिनशासनोन्नतयः सर्वाः प्रवर्तन्ते, तस्मादनिपुणमतेरयमभिप्राय इत्युपेक्षणीयः। उक्तं च—दव्वत्थओ भावत्थओ दव्वत्थओ बहुगुणोत्ति बुद्धिहसिया। अनिउणमइवयणमिणं छज्जीवहियं जिणा बिंति ॥१॥ तस्मात्—अकसिणपवत्तगाणं विरयाविरयाण एस खलु जुत्त। संसारपयणुकरणो दव्वत्थए कूवदिट्ठंतो ॥१॥ इति गाथार्थः ॥ १८ ॥ यद्येवं कथमागमे क्वचिल्लूताद्यपनयनं साधोरभिहितमित्याह—

॥ मूलम् ॥—अन्नाभावे जयणाए मग्गनासो हवेज्ज मा तेण ।
पुव्वकयायणाइसु इसिंगुणसंभवे इहरा ॥१९॥

व्याख्या—अन्यस्य श्रावकस्य वा भद्रकादेरभावे मार्गनाशस्तीर्थोच्छेदो माभूत्तेन कारणेन पूर्वकृतायतनादिषु चिरन्तनजिनभवनेषु, आदिशब्दाद् बिम्बेषु ईषद्गुणसम्भवे च कस्यचिज्जिनधर्मप्रतिपत्त्यादिस्तोकगुणसम्भवे च यतनया षट्कायोपमर्दविरहात्मिकया परैरदृश्यमानस्वरूपया च लूताद्यपनयनादिकं विधेयमिति शेषः यदुक्तं—
सीलेह मंखफलए इयरे चोयंति तंतुमाईसु । अभिजोयंति सवित्तिसु अणिच्छफेडंतदीसंता ॥१॥ व्याख्या—इतरे चैत्यवासिनस्तान् साधवः प्रेरयन्ति तन्त्वादिषु लूतापनयनादिषु विषये, कथं ? शीलयत सज्जयत मङ्खफलकान्याजीविकाहेतुत्वसाम्याज्जिनबिम्बानि, इत्येवं स्ववृत्तिषु स्वाजीविकास्वभियोजयन्ति, यदा तु ते नेच्छन्ति तदा परैरदृश्यमाना स्वयमप्यपनयन्ति लूतादीनि ॥१९॥ इतरथा पूर्वोक्तविपर्यये पुनः किमित्याह—

॥ मूलम् ॥—चेइयकुलगणसंघे आयरियाणं व पवयणसुए य ।
सव्वेसु वि तेण कयं तवसंजमउज्जमंतेण ॥२०॥

व्याख्या—चैत्यकुलगणसङ्घेषु तथाचार्याणां च, तथा प्रवचनश्रुतयोश्च, किं ? सर्वेष्वपि तेन कृतं कृत्यमिति गम्यते केनेत्याह—तपःसंयमयोरुद्यच्छता साधुनेति, तत्र चैत्यान्यर्हत्प्रतिमाः, कुलं चान्द्रादि, गणः कुलसमुदायः, सङ्घः समस्त एव साध्वादिसङ्घात, आचार्याः प्रतीताः । च शब्दादुपाध्यायपरिग्रहो, भेदाभिधानं च प्राधान्यख्यापनार्थं, प्रवचनमर्थः

श्रुतं सूत्रमेव, च शब्दः स्वगतानेकभेदसूचक एतेषु सर्वेष्वपि स्थानेषु तेन कृतं कृत्यं यस्तपःसंयमोद्यमवान् वर्तते । इयमत्र भावना--अयं हि नियमाद् ज्ञानदर्शनसम्पन्नो भवति, अयमेव च गुरुलाघवमालोच्य चैत्यादिकृत्येष्वपि सम्यक् प्रवर्तते, यथैहिकामुष्मिकगुणवृद्धिर्भवति, विपरीतस्तु कृत्येऽपि प्रवर्तमानोऽविवेकादकृत्यमेव सम्पादयतीति गाथार्थः ॥२०॥ अथ शठजनप्ररूपणामुद्गीर्य निराकुरुते--

॥ मूलम् ॥--केइ भणंति भणइ सुहुमविचारो न सावगाण पुरो ।
तं न जओ अंगाइसु सुव्वइ तव्वणणा एवं ॥२१॥

व्याख्या--केचिद् भवाभिनन्दिनो भणन्ति प्रतिपादयन्ति, किमित्याह--न भण्यते न कथ्यते सूक्ष्मविचारो द्रव्यस्तवभावस्तवाधिकारविवरणादिरूपः, कथं पुरोऽग्रतः, केषां ? श्रावकाणां, ते हि विदितसकलसमाचाराः कलिकालबलावलुप्तशक्तिकं प्रमादपरवशं यतिजनमवलोक्य मन्दधर्माणो माभूवन्निति, तदेतन्न, यतोऽङ्गादिष्वङ्गोपाङ्गादिषु श्रूयते तेषां श्रावकाणां वर्णना गुणोत्कीर्तनं स्वरूपकथनमिति यावदेवं वक्ष्यमाणप्रकारेणेति गाथार्थः ॥२१॥ तथाहि--

॥ मूलम् ॥--लद्धट्ठा गहियठा य पुच्छियठा विणिच्छियठा य ।
अहिगयजीवाइया अचालणिज्जा पवयणओ ॥२२॥
तह अठि अठिमज्झा--णुरायरत्ता जिणिंदपण्णत्तो ।
एसो धम्मो अठो परमठो सेसगमणठो ॥२३॥

॥ ७९ ॥

सुत्ते अत्थे कुसला उस्सग्गववाईए तहा कुसला ।
ववहारभावकुसला पवयणकुसला य छट्ठाणा ॥२४॥

व्याख्या—तत्र लब्धार्था निरन्तरश्रवणतो, गृहीतार्थाः सम्यगवधारणातः, प्रश्नितार्थाः क्वचित्संशये सति, विनिश्चितार्था ऐदम्पर्यार्थोपलम्भात्, चकारो विशेषणसमुच्चये ।

अधिगताः स्वस्वरूपेण विदिता जीवादय, आदिशब्दादजीवपुण्यपापाश्रवसंवरादयो दण्डकोक्ताः पदार्थैयैस्ते तथा, अत एव अचालनीयाः क्षोभयितुमशक्याः प्रवचनाज्जैनेन्द्रशासनात् ॥२२॥ तथास्थीनि चास्थिमज्जानि च तद्गर्भरूपाणि अनुरागेण प्रस्तावाज्जिनमतप्रेम्णा रक्तानीव रक्तानि वासनासाधर्म्याद्, अस्थ्यस्थिमज्जान्यनुरागरक्तानि येषां ते तथा, क्तान्तस्येह परनिपातेऽभिधानात्, कथमित्याह—एष साक्षान्निषेव्यमाणो जिनप्रज्ञप्तो धर्मोऽर्थो वस्तुरूपतयोपादेयः, परमार्थस्तत्त्वभूतः परमगतिहेतुत्वात्, शेषकः शिवशाक्यकपिलादिप्रणीतो, विभक्तिलोपो मकारश्चेह प्राकृतत्वात्, अनर्थोऽवस्तुरूपस्तदियता भगवत्यङ्गाद्युक्तदण्डकोऽर्थतः संसूचितः, स चायं—अहिगयजीवाजीवा उवलद्धपुन्नपावासवसंवरनिज्जरकिरिया अहिगरणबंधप्पमुक्खकुसला असहिज्जा देवासुरनागसुवन्नजक्खरक्खसकिन्नरकिंपुरिसगरुलगंधव्वमहोरगाइयेहिं देवगणेहिं निग्गंथाओ पावयणाओ अज्जानिग्गंथे पावयणे निस्संकिया निक्कंखिया निव्वित्तिगिच्छा लद्धठा गहियट्ठा पुच्छियट्ठा अहिगयट्ठा विणिच्छियट्ठा अट्ठिमिंजपेमाणुरागरत्ता अपमाउसो निग्गंथे पावयणे अयं परमट्ठे सेसे अणट्ठे ऊसियफलिहअवंगुयदुवाराचियत्तंतेउरघरप्पवासा बहुहिं सीलवयगुणवेरमणपच्चक्खाणपोसहोववासेहिं चाउदसट्ठ-

मुदिट्ठपुन्निमासिणीसु पडिपुन्नं पोसहं सम्मं अणुपालेमाणा समणे निग्गंथे फासुएणं एसणिज्जेणं असणपाणखाइमसाइमेणं वत्थपडिग्गहकंबलपायपुच्छणेणं पीढफलगसेज्जासंथारएणं पडिलाभेमाणा अहापडिग्गहिएहिं तवोकम्मेहिं अप्पाणं भावेमाणा विहरंतीत्ति ॥२३॥

तथा कुशलशब्दस्योभयत्रापि सम्बन्धात् पदवाक्यादिविच्छेदप्रधानोदात्तादिघोषविशुद्धास्खलितत्वादिगुणोपेतसूत्रोच्चारणपरिज्ञानात् सूत्रे कुशलाः, सुगुरुसम्प्रदायतः स्वसमयपरसमयनिश्चयव्यवहारनयादिविभागेन सूत्राभिधेयस्थापनादर्थे कुशलाः, सामान्योक्तोविशेषोक्तोविधिरपवादः। यथा पुढवाइसु आसेवेत्यादि वक्ष्यमाणं, ततश्च तयोर्भवमौत्सर्गापवादिकं कार्यमिति शेषस्तत्र तथापरिज्ञानप्रकारेण कुशलाः। व्यवहारश्चतुर्धा धर्मार्थकामलोकभेदात्, तत्र धर्मे यद्देवताबिम्बविक्रयेण न जीवति, देवद्रव्यं च स्वर्णादिग्रहणकमन्तरेण न वर्धयति, नात्मनाप्यङ्गोद्धारकेण गृह्णाति। न च देवद्रव्याधिगत्वेनाधमर्णान् शरीरेण शकटबलीवर्दादिना वा वेष्ट्यादि कारयति। अर्थेऽवन्ध्यफलदायकनिरवद्यक्रयाणकसङ्ग्रहः। कामे गृहमेधिन्या मार्दवेनानुवर्त्तनं, सदा हृदयानर्पणं च। लोके राजकुलगमनतद्विरुद्धवर्जनप्रधानसंसर्गजन्मश्रुतजात्या वृद्धसेवनादिः।

एवंविधे व्यवहारे कुशला दक्षा भावकुशला बाह्यान्तरचेष्टाभिरभिप्रायपरिज्ञानपूर्वमभिनवधर्माणां स्थिरीविधायिनो लोकेऽपि पराभिप्रायकौशल्यादात्मपरानाबाधया सर्वत्र प्रवृत्तिकारिण इतिशब्दाध्याहारादित्येवं षट्स्थानात्, षण्णां स्थानानां समाहारः षट्स्थानं, तदाश्रित्य ल्यबलोपे पञ्चमी, प्रवचनकुशला भवन्ति। चः प्राग्वर्णनापेक्षया समुच्चये,


॥ ८१ ॥

अनेन च प्रवचनकुशला भवन्ति। चः प्राग्वर्णनापेक्षया समुच्चये, अनेन च प्रवचनकौशल्येन कृतव्रतपरिकर्मतादीन्य-पराण्यपि पञ्चपदान्युपलक्ष्यन्ते, तथा चाह—कयवयकम्मपभावो सीलत्तं चेव तहय गुणवत्तं। रिउमयंववहरणं चिय गुरुसुस्सूसा य बोधव्वा ॥१॥ पवयणकोसल्लं पुण छट्ठं ठाणं तु होइ णायव्वं। छठाणगुणेहिं जुओ उक्कोसो सावगो होइ ॥२॥ एतद्व्याख्या तु षट् स्थानकादवसेया, तदेवमुपासकानां सूक्ष्मार्थविचारनिपुणतायाः सूत्रेऽभिधानात् सूक्ष्म-विचारस्तेषां न कथ्यत इति यदुक्तं तदपास्तमिति गाथात्रयार्थः ॥२४॥ एवं च सति ये सिद्धान्ततत्त्वमपह्नुत्योन्मार्गमुप-पदिशन्ति सुसाधुनिन्दां च कुर्वन्ति तेषां विश्वस्तघातित्वमाह –

॥ मूलम् ॥—पुच्छंताणं धम्मं तंपि य न परिक्खिउं समत्थाणं।
आहारमित्तलुद्धा जे उम्मग्गं उवइसंति ॥२५॥
सुगइं हणंति तेसिं धम्मियजणणिंदणं करेमाणा।
आहारपसंसासु य पाडंति जणं दुग्गइं बहुयं ॥२६॥

व्याख्या—प्रच्छतां धर्मं गृहियतिभेदभिन्नं, तमपि च कथ्यमानं धर्मं परीक्षितुं विवेक्तुमसमर्थानां मुग्धबुद्धित्वाद् अनेन तेषामत्यन्तानुकम्पनीयतामाह, भव्यप्राणिनामिति गम्यते, आहारोऽशनादिरूपलक्षणं चैतद्वस्त्रपात्रपूजादीनां, तन्मात्रे सिद्धिसुखविमुखतया लुब्धा गृद्धा ये यथाछन्दादय उन्मार्गमुत्पथमशुद्धदानादिरूपमुपदिशन्ति कथयन्ति, मा ममैते, विवेकिनः सन्त आधाकर्मादिदोषदूषितमाहारादि न दास्यन्तीत्यनेन च तेषामतिक्लिष्टतामाह, यदुच्यते—

जह सरणमुवगयाणं जीवाण न किं तईसिरोजाउ । एवं आयरिओवि हु उस्सुत्तं पन्नवंतोत्ति ॥१॥ यत्तदोर्नित्यसम्बन्धात्ते किमित्याह—सुगतिं स्वर्गापवर्गादिकां तेषां पृच्छकानां घ्नन्ति बाधन्ते उन्मार्गस्थापितानां तेषां सुगतिहानेस्तन्मूलत्वात्तथा ते धार्मिकजनस्य कलिकालेऽपि यथाशक्ति यतमानस्य विशुद्धाहारवस्त्रपात्रोपाश्रयग्राहिणो निन्दनं हीलनं कुर्वाणा यथैते वक्रवृत्तयो विप्रतारका देयग्राहकादिशुद्धिव्याजेन साधूनां दानं च निवारयन्ति अतो नैतद्वचः श्रोतव्यमिति ।

आहाराय प्रशंसा आहारप्रशंसाः कलिका ठक्कलपद्रुमाः पुरुषा भवन्तो भवदीयमाने नैवं तीर्थं प्रवर्तते, एषणीयानेषणीयविचारणं च कार्पण्यलक्षणमित्येवंलक्षणा आहारदानमेवोत्तरमित्यादिरूपा वा, ताभिः, सप्तमी चेयं तृतीयार्थे, चः पूर्वोक्तसमुच्चये नयन्ति प्रापयन्ति दुर्गतिं नैरयिक्यादिकां जनं लोकं बहुकं प्रभूतमिति गाथाद्वयार्थः ॥२६॥ अधुना यः शरीरसामर्थ्यादिविरहात् क्रियाशिथिलो मनाक्शुद्धचित्ततया परलोकाभिमुखश्च, तस्योपदेशमाह—

॥ मूलम् ॥—हुज्ज हु वसणप्पत्तो सरीरदोव्बल्लयाए असमत्थो ।
चरणकरणे असुद्धे सुद्धं मग्गं परूवेज्जा ॥ २७ ॥

व्याख्या—हुर्वाक्यालङ्कारे, भवेत् स्यात् व्यसनप्राप्त आपद्गत इन्द्रियार्थाशक्तो वा, वा शब्दाध्याहाराद्वार्धकरोगादिकृतया शरीरदुर्बलतया, लकारस्य द्वित्वं प्राकृतत्वाद्, असमर्थो वा स्वाध्यायप्रतिलेखनादिक्रियां कर्तुमशक्तः । ततः किं कुर्यादित्याह—चरणं च व्रतादि, करणं च पिण्डविशुद्ध्यादि तस्मिन्नशुद्धेऽभिहितनीत्या अतिचारमलकलुपिते आत्मानं

॥ ८३ ॥

निन्दन् शुद्धं यथास्थितं मार्गं ज्ञानादिरूपं प्ररूपयेदुपदिशेत्, स हि सिद्धान्तानुरागादात्मानं निन्दन् मार्गानुपाती भवति उक्तं च---ओसन्नोवि विहारे कम्मं सिढिलेइ सुलहबोहीओ। चरणकरणं विसुद्धं उववूहंतो परूवंतो ॥ १ ॥ इति गाथार्थः ॥ २७ ॥ एतद्विपर्यये दोषमाह---

॥ मूलम् ॥---परिवारपूयहेउं पासत्थाणं च आणुवित्तीए।
जो न कहेइ विसुद्धं तं दुल्लहबोहियं जाण ॥ २८ ॥

व्याख्या---परिवारश्च परिच्छदः साध्वादिः, पूजा च वस्त्रपात्रादिभिः सत्कारस्तयोर्हेतु निमित्तं, ह्रस्वत्वं प्राकृतत्वात्। पार्श्वे ज्ञानादीनां समीपे तिष्ठन्तीति पार्श्वस्थास्तेषामुपलक्षणं चैतदवसन्नादीमनुवृत्त्या तच्चित्तावर्जनार्थं, चकागल्लोकयात्राद्यर्थं च, यः कश्चिल्लुब्धो न कथयति न प्ररूपयति विशुद्धं मार्गमिति गम्यमिदमत्र हृदयं— मनाक् शुद्धात्मापि यः शिथिलपरिवारभयाद्विज्ञातैषणीयानैषणीयाः श्रावका वा वस्त्रपात्रादिभिर्मे पूजां न विधास्यन्ति, पार्श्वस्थादयो वा कुपिताः सन्तो ग्रामादेर्निष्कासयिष्यन्तीति कृत्वा विशुद्धं न कथयति, तं दुर्लभबोधिकं बोधिः प्रेत्यजिनधर्मावाप्तिः सा दुर्लभा यस्य सम्यग्मार्गलोपात् स तथा तमनन्तसंसारिकमित्यर्थो जानीहि बुध्यस्व हे शिष्य इति गाथार्थः ॥ २८ ॥ ननु यद्येवं गरीयान् दोषस्तत्कथमन्यथा कथयन्तीत्याह—

॥ मूलम् ॥—सुहमहुरं परिणइ--मंगुलं च गेएहंति देंति उवएसं।
सुहकडुयं परिणइ---सुंदरं च विरलच्चिय भणंति ॥ २९ ॥

व्याख्या--मुखे प्रारम्भे उच्चारकाले मधुरं प्रियः श्रोतृयादृच्छिकसमाचारानुकूल इत्यर्थः । तं परिणतौ परिपाके मङ्गुलोऽसुन्दरो विपाकदारुणत्वात्, चशब्दस्यापिशब्दार्थत्वात्तमप्युपदेशं गृह्णन्ति श्रोतारो, ददति चाचार्यादयो बहवः । मुखकटुकं श्रवणाप्रियं परिणतिसुन्दरमप्युपदेशमितिहापि योगो विरला एव भणन्ति प्रस्तुतवद् गृह्णन्ति च । यदाह--सुलभाः पुरुषा राजन्--नपथ्यप्रियवादिनः । अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥१॥ इति गाथार्थः ॥२९॥ अथ मुखकटुकपरिणामसुन्दरवादिनो वक्तुः परमोपकारितामाह--

॥ मूलम् ॥--भवगिहमज्झंमि पमायजलणजलियंमि मोहनिद्दाए ।
उट्ठवइ जो सुयंतं सो तस्स जणो परमबंधू ॥ ३० ॥

व्याख्या--भव एव गृहं जीवावस्थितिसाधर्म्याद्भवगृह, तस्य मध्यमन्तस्तत्र, किं विशिष्टे ? प्रमादोऽष्टधा, तद्यथा--अज्ञान संशयश्चैव मिथ्याज्ञानं तथैव च । रागो द्वेषोऽनवस्था च स्मृतेर्धर्मेष्वनादरः ॥ १ ॥ योगदुःप्रणिधानं च प्रमादोऽष्टविधः स्मृतः ॥ स एव ज्वलनः सन्तापकत्वेन, तेन ज्वलिते प्रदीप्ते, इह च भवस्थेषु प्राणिष्वपि स्थितः प्रमाद उपचर्यते । मोह एव चैतन्यतिरोधायकत्वान्निद्रा, तया स्वपन्तं शयानं जीवमिति गम्यम्, उत्थापयति प्रबोधयति यः स जनो गुर्वादिस्तस्य स्वपतुः परमबन्धुरात्यन्तिकैकान्तिकस्वजन इति गाथार्थः ॥ ३० ॥ अधुना प्राक्प्ररूपितं शुद्धप्ररूपकमेवोपबृंहयति--


॥ ८५ ॥

॥ मूलम् ॥—जइवि हु संकम्मदोसा मणयं सीयंति चरणकरणेसु ।
सुद्धप्परूवगा तेण भावओ पूयणिज्जंति ॥ ३१ ॥

व्याख्या—यद्यपि हुरेवकारार्थः, स चान्ते योक्ष्यते । स्वकर्मदोषान्निविडचारित्रावरणीयकर्मोदयलक्षणान्मनाक्किं-चित्सीदन्ति मन्दायन्ते चरणकरणयोर्वक्ष्यमाणस्वरूपयोः, तथापीत्यध्याहारः, शुद्धप्ररूपका यथास्थितमार्गप्रदर्शकास्तेनैव शुद्धप्ररूपकत्वलक्षणेन गुणेन भावतो निरुपचारं पूजनीयाः सत्कारार्हा, इति प्रस्तुतप्रक्रमसमाप्ताविति गाथार्थः, ॥३१॥
इत्थं मार्गशुद्धौ प्रतिपादितायां विवेकिनो यत्कुर्वन्ति तदाह—

॥ मूलम् ॥—एवं जिया आगमदिट्ठिदिट्ठ—सुन्नायमग्गा सुहमग्गलग्गा ।
गयाणुगामीण जणाण मग्गे लग्गंति नो गड्डरिगापवाहे ॥ ३२ ॥

व्याख्या—एवमुक्तन्यायाज्जीवा भव्यप्राणिन आगम एव सन्मार्गदर्शकत्वेन दृष्टिर्लोचनं तया दृष्टो विलोकितः सामान्यरूपेण, सुज्ञातो विशेषेणोत्सर्गापवादतो मार्गो यैस्ते तथा शुभमार्गलग्ना सम्यगनुष्ठाना, न लगन्ति न गच्छन्ति, क्व ? गतानुगामिनां जनानां मार्गे, तत्र गतमेवानुगच्छन्तीति गतानुगामिनः । न तत्त्वावलोकिन स्तेषां, किंविशिष्टे मार्गे ? गड्डरिकास्तासां प्रवाहो नैरन्तर्यश्रेणिगमनं स इव तस्मिन्, यथा हि गड्डरिकायामेकस्यां क्वापि प्रस्थितायां विचारशून्य-मन्यास्तामेवानुव्रजन्ति, एवं केचिदपरीक्षिततत्त्वाः प्रवृत्तिप्रधानलोकप्रवृत्तमेव मार्गमनुयान्ति, विवेकिनस्तु तत्त्वमेवानु-सरन्तीति वृत्तार्थः ।। ३३ ॥ अथ महाजनो येन गतः स पन्था इति न्यायाल्लोकप्रवृत्तिरेव श्रेयसीति ये मन्यन्ते तान्

शिक्षयितुमाह--

॥ मूलम् ॥--नेगंतेणं चिय लोग—नायसारेण इत्थ होयव्वं ।
बहुमुंडाइवयणओ आणा इत्तो इह पमाणं ॥ ३४ ॥

व्याख्या--एकान्तेनैव नैव क्वचिल्लोकव्यवहारस्यापि पुरस्करणीयत्वं, यतो महाजनो येन गतः स पन्थेति लोकन्यायसारेण व्यवहारेणैवात्र नैकान्तेन भवितव्यम् । बहुमुण्डादि वचनतो यदि हि लोकप्रवृत्तिरेव बलीयस्यभविष्यत्तदेदमागमवचनमपि नाभविष्यत्, तथाहि--कलहकरा डमरकरा असमाहिकरा अनेच्छुइकरा य । होहिंति भरहवासे बहुमुण्डे अप्पसमणेया ॥ १ ॥ इत एतस्माद्धेतोः सावधारणत्वादाज्ञैव तीर्थकृदुक्तमेवेह प्रामाण्यविचारे प्रमाणं तत्त्वमिति गाथार्थः ॥ ३३ ॥ अथ गतानुगतिकपक्षमेवाह--

॥ मूलम् ॥—बहुजणपवित्तिमित्तं इच्छन्तेहिं इह लोइओ चेव ।
धम्मो न उज्झियव्वो जेण तहिं बहुजणपवित्ती ॥ ३४ ॥

व्याख्या---बहवश्च ते जनाश्च तेषां प्रवृत्तिः स्वरुचिविरचितमनुष्ठानं, तदेव बहुजनप्रवृत्तिमात्रमाराधनविराधनविमर्शरहितमित्यर्थं, इच्छद्भिरभिलषद्भिरिह धर्मविचारे, लोकाः, शैवजैनमुनिप्रभृतयस्तेषामयं लौकिकः, स एव धर्मो नोज्झितव्यो न मोक्तव्यो, यत स्तस्मिन् बहुजनस्य राजामात्यादेः प्रवृत्तिः । न चासौ मुच्यते इति तस्मादसङ्गत एवा पक्ष इति गाथार्थः ॥ ३४ ॥ एवंस्थिते कृत्यमाह--

॥ मूलम् ॥—ता आणाणुगयं जं तं चेव बुहेण सेवियव्वं तु ।
किमिह बहुणा जणेणं हंदि न से अत्थिणो बहुया ॥ ३५ ॥

व्याख्या—यस्मात्कारणान्न बहुजनप्रवृत्तिरालम्बनीया तस्मादाज्ञानुगतमागमानुपाति यदनुष्ठानं भवति, तदेव बुधेन विवेकिना सेवितव्यमाचरितव्यं, तुशब्दात्तद्विसंवादि वर्जनीयमित्यर्थः । किं ? न किञ्चिदित्यर्थः । इह धर्मविचारणायां परलोकचिन्तायां वा बहुना जनेन । हंदीत्युपप्रदर्शने हेतौ वा, न नैव से तस्यानुगतधर्मस्यार्थिनोऽभिलाषुकाः श्रेयोऽर्थिनो वा मोक्षकाङ्क्षिणो बहवः प्रभूताः, किन्त्वल्पा एव सम्प्रतिकाले, बहवो मुण्डा अल्पाश्च श्रमणा इति वचनादिति गाथार्थः ॥ ३५ ॥ इत्थमनेकधा विधिमार्गसमर्थनमाकर्ण्य महामोहोपहतबुद्धयो यद्वदंति तदाह—

॥ मूलम् ॥—दूसमकाले दुलहो विहिमग्गो तम्मि चेव कीरंते ।
जायइ तित्थुच्छेओ केसिंवि कुग्गहो एसो ॥ ३६ ॥

व्याख्या—दुःषमावसर्पिण्याः पञ्चमोऽरकः, स चासौ कालश्च दुषमाकालस्तस्मिन् दुर्लभो दुरापः स्वकीयक्लिष्टकर्मपरिणतेरुन्मार्गप्रवृत्तलोकाद्वा विधिमार्गप्रवृत्तलोकाद्वा विधिमार्गः शास्त्रानुसारिज्ञानश्रद्धानुष्ठानरूपस्तस्मिन्नेव क्रियमाणे, प्राक्तनचेवशब्दस्येहापि सम्बन्धात्तीर्थोच्छेद एव जिनशासनविलुप्तिर्जायते, शास्त्रोक्तानुष्ठानस्य प्रायेण कर्तुमशक्यत्वाद् , इतरस्य चामार्गरूपत्वादेव साक्षान्निरूपितः केषाञ्चिदतत्त्ववेदिनां कुग्रहः कदभिप्राय इति गाथार्थः ॥ ३६ ॥ कुग्रहत्वमेव तेषां प्रकटयति ।

॥ मूलम् ॥--जम्हा न मोक्खमग्गे मुत्तूणं आगमं इह पमाणं ।
विज्जइ छउमत्थाणं तम्हा तत्थेव जइयव्वं ॥ ३७ ॥

व्याख्या--सुगमा, केवलं करणाधीनज्ञानिनां स्वर्गापवर्गमार्गादौ प्रत्यक्षादिप्रमाणाविषयत्वेनागमस्यैव प्रामाण्यं, तथाहि--न तावत्तत्र प्रत्यक्षं प्रगल्भतेऽक्षव्यापारागोचरत्वाद्, नाप्यनुमानं साध्याविनाभाविनो लिङ्गस्य कस्यचिदनुपलम्भाद्, आगमस्त्वाप्तोपज्ञत्वादव्याहतप्रचार एव, ततस्तं विमुच्यान्यथा समाचरतां कुग्रह एवावशिष्यत इति ॥ ३७ ॥
भूयोऽपि कुमार्गसन्मार्गौ भङ्ग्यन्तरेणाह--

॥ मूलम् ॥--गिहिलिंगकुलिंगियदव्व--लिंगिणो तिन्नि हुंति भवमग्गा ।
सुजइसुसावगसंविग्ग--पक्खिणो तिन्नि मोक्खपहा ॥ ३८ ॥

व्याख्या--गृहमेव लिङ्गं येषां ते गृहलिङ्गा गृहस्था एव, कुत्सितं च संसारकारणत्वात्तल्लिङ्गं च, तद्विद्यते येषां ते कुलिङ्गिनश्चरकादयो, द्रव्यलिङ्गं भावविकलानां साधुनेपथ्यधरणं तद्विद्यते येषां ते द्रव्यलिङ्गिनः पार्श्वस्थादय, आधारे आधेयोपचारात्तदनुष्ठानानि, त्रयस्त्रिसङ्ख्याः किं भवन्ति ? भवमार्गाः संसारपथाः । अथ गृहिलिङ्गकुलिङ्गिनौ भवतां संसारपथौ, रजोहरणमुखवस्त्रिकादिभगवल्लिङ्गधारिणस्तु कथम् ? अत्रोच्यते--सम्यग्ज्ञानादिविकलेन लिङ्गमात्रेण न किञ्चित्त्राणम् । तथाच--संसारसागरंमि णं परिभमंतेहिं सव्वजीवेहिं । गहियाणि य मुक्काणि य अणन्तसो दव्वलिङ्गाणि ॥ १ ॥ किञ्च--अन्यलिङ्गकृतं पापं जिनलिङ्गेन शुद्ध्यति । जिनलिङ्गकृतं पापं वज्रलेपोपमं मतम् ॥ २ ॥ इति ।

शोभनं सर्वसंवरप्रतिपत्तितो, यतते प्रतिलेखनादिसामाचार्यामुद्यच्छतीति सुयतिः सुसाधुः, शोभनं श्रद्धानज्ञानवत्तया सुयतिभ्यो जिनवचनं श्रृणोतीति सुश्रावकः। तथा चोक्तं—संपत्तदंसणाइ पइदियहं जइजणाओ सुणेई। सामायारिं परमं जो खलु तं सावगं बिंति ॥ १ ॥

संविग्ना मोक्षकाङ्क्षिणः सुसाधवस्तेषां पक्षः परिग्रहः स विद्यते येषां ते संविग्नपक्षिणः पूर्ववत् त्रयो मोक्षमार्गाः, ननु पूर्वं मोक्षमार्गद्वैविध्यमेवोक्तमधुना तु त्रैविध्यमिति कथं न विरोधः? सत्यं, तृतीयमार्गस्याप्राधान्यत्वादल्पत्वात् कादाचित्कत्वाच्च तत्र न विवक्षा, अत्र तु संसारमार्गत्रैविध्यप्रस्तावात्तद्ग्रहणमित्यविरोधः। तल्लक्षणं चैताभ्यो गाथाभ्योऽवसेयं तथाहि—

जइ न तरसि धारेउं मूलगुणभरं सउत्तरगुणं च। मोत्तूण तो तिभूमीसु सावगत्तं वरतरागं ॥ १ ॥ अच्चणुरत्तो जो पुण। (लिंगधारणेऽत्यनुरक्तो मनाक् सशूकश्च) न मुयइ बहुसोवि पन्नविज्जंतो (द्रव्यलिंगं) संविग्गपक्खियत्तं। करेज्ज लब्भिहसि तेण पहं ॥ २ ॥ तथा—संविग्गपक्खियाणं लक्खणमेयं समासओ भणियं। उसन्नचरणकरणावि जेणं सम्मं विसोहेंति। ॥३॥ सुद्धं सुसाहुधम्मं कहेइ निंदइ य नियमायारं। सुतवस्सियाण पुरओ होइ य सव्वोमरायणिओ ॥ ४ ॥ वंदइ न वंदावइ किइकम्मं कुणइ कारवे नेय। अत्तट्ठा न वि दिक्खइ देइ सुसाहूण बोहेउं ॥ ५ ॥ इति गाथार्थः ॥ ३८ ॥ अथ कथं सुयत्यादयो मोक्षमार्गा भवन्त्यपरे च नेत्याह—

॥ मूलम् ॥—सम्मत्तनाणचरणा मग्गो मोक्खस्स जिणवरुद्दिठो ।
विवरीओ उम्मग्गो । णायव्वो बुद्धिमंतेहिं ॥ ३९ ॥

व्याख्या—सम्यक्त्वज्ञानचरणानि, पुंस्त्वं प्राकृतभवं, मार्गो मोक्षस्य जिनवरोद्दिष्टः सर्वविदाख्यातोऽनेन मार्गस्याविसंवादित्वमाह तानि च सर्वथात्रैव सुयत्यादिषु, न गृहिलिङ्गादिष्विति । विपरीतो मिथ्यात्वज्ञानाविरतिस्वरूप उन्मार्ग उत्पथो ज्ञातव्यो बुद्धिमद्भिरिति गाथार्थः ॥ ३९ ॥ ज्ञानादीनामेव स्वरूपमाह—

॥ मूलम् ॥—सन्नाणं वत्थुगओ बोहो सद्दंसणं च तत्तरुई ।
सच्चरणमणुट्ठाणं विहिपडिसेहाणुगं तत्थ ॥ ४० ॥

व्याख्या—वस्तूनि जीवादयः पदार्थास्तेषु गतः स्थितो वस्त्वनुरूपः संशयविपर्ययरहित इत्यर्थः । बोधः संवित्, किमित्याह—तत्सम्यग्ज्ञानं सद्ज्ञानमुच्यते इति शेषः । तथा तत्त्वेषु जिनप्रज्ञप्तेषु रुचिरभिलापः, किं ? सद्दर्शनं सम्यक्त्वमित्यर्थः । तथानुष्ठानं क्रियाकलापः, किं विशिष्टं ? विधिप्रतिषेधानुगं, तत्र विध्यनुगतमुपादेयेषु, प्रतिषेधानुगं हेयेषु, किं, ? सच्चरणं शोभनचारित्रम्. तत्रेति व्याख्याक्रमार्थ इति गाथार्थः ॥ ४० ॥ सच्चरणमनुष्ठानमित्युक्तमधुना सुयतिसुश्रावकविषयितया तदेव दर्शयन्नाह—

॥ मूलम् ॥—जीव म वहहु म अलियं जंपहु म अप्पं अप्पहु कंदप्पहु ।
म हरहु म करहु परिग्गहु एहु मग्गु सग्गहु अपवग्गहु ॥ ४१ ॥

पूया जिणिंदेसु रई वएसु जुत्तो य सामाइयपोसहेसु ।
दाणं सुपत्ते सवणं सुतित्थे सुसाहुसेवा सिवलोयमग्गो ॥ ४२ ॥

व्याख्या—आद्यं वन्दनकं नाम छन्दः सुगमं, नवरमनेन प्राणिवधविरमणादीनि पञ्चमहाव्रतान्युक्तानि, व्यतिक्रमभणनन्तु ह्यनुलोम्यादिति ॥ ४१ ॥ तथा पूजा पूर्वोक्तशब्दार्था जिनेन्द्रेष्वनेनानन्यसामान्यतीर्थकृद्भक्तितः सम्यक्त्वशुद्धिरावेदिता रतिरासक्तिस्तद्विषयविभागविचारणानुष्ठानसुशीलतेति यावत् । व्रतेषु स्थूलप्राणातिपातविरमणादिषु द्वादशसु, यत्नश्च सामायिकपोषधयोरनयोश्च व्रतान्तर्गतत्वेऽपि पृथगुपादानं सावद्यव्यापारपरिहाररूपत्वेन प्रधानमोक्षाङ्गत्वाद्, दानं पूजानुग्रहबुद्धया वितरणं, सुपात्रे ज्ञानदर्शनचारित्राधारः साधुस्तस्मिन्, अनेन पात्रे दानमनर्घफलमेवेति सूचयति । यदुक्तं प्रज्ञप्त्यां—समणोवासगस्स णं भंते तहारूवं असंजय अविरय अपडिहयपच्चक्खायपावकम्मं फासुएण वा अफासुएण वा एसणिज्जेण वासणपाणखाइमसाइमेणं पडिलाभेमाणस्स किं कज्जइ ? गोयमा एगंत सो पावकम्मे कज्जइ, नत्थि से कावि निज्जरा कज्जइत्ति । एवं तर्हि दीनादीनां दानं न देयमित्यापन्नमसङ्गतं चैतद्, अर्हतापि सांवत्सरिकदानस्य पात्रापात्रविचारविरहेण प्रवर्तितत्वात्, सत्यं, गुणबुद्धया दानमाश्रित्यायं विधिरुक्तः, कृपादानं तु न क्वापि जिनैर्निवारितं, आह च—

सव्वेहिंपि जिणेहिं दुज्जयजियरागदोसमोहेहिं । सत्ताणुकंपणट्ठा दाणं न कहिंवि पडिसिद्धं ॥ १ ॥ तथा श्रवणमाकर्णनं धर्मस्येति गम्यते, क्व ? सुतीर्थे, सुष्ठु सुखेन वा तीर्यते भवोदधिरनेनेति सुतीर्थं, सम्यग्ज्ञानक्रिया-

सम्पन्नः साधुरनेन क्रियाविकले धर्मश्रवणनिषेधमाह, यदाह--चारित्रेण विहीनः श्रुतवानपि नोपजीव्यते सद्भिः । निर्मलजलसम्पूर्णः कुलजैश्चाण्डालकूप इव ॥ १ ॥ सुसाधुः वर्णितस्वरूपस्तस्य सेवा पर्युपास्तिः । अनेनासाधुसंसर्गनिषेधमाह, यतः--अंबस्स य लिंबस्स य दुण्हंपि समागयाइं मूलाइं । संसग्गीइ विनट्ठो अंबो लिंबत्तणं पत्तो ॥ १ ॥ अयं शिवलोकमार्गो भवतीति रूपकद्वयार्थः ॥ ४२ ॥ इत्थमनेकधा शास्त्रेषु सन्मार्गप्रतिपादनेऽपि रागाद्युपहतचेतसां बहुतरजीवानामुन्मार्गगामित्वमवलोक्य सखेदं रागादिमाहात्म्यमाह--

॥ मूलम् ॥--रागोरगगरलभरो तरलइ चित्तं तावइ दोसग्गी ।
कुणइ कुमग्गपवित्तिं महामईणंपि हा मोहो ॥ ४३ ॥

व्याख्या--राग एव दारुणं मरणहेतुत्वादुरगगरलं सर्पविषं तस्य भर उत्कर्षः, किं ? तरलयति विधुरयति चित्तं मनस्तथा तापयति दुनोति प्रस्तुतत्वात् चित्तमेव, द्वेष एव सन्तापकत्वादग्निर्द्वेषाग्निर्मत्सरानलस्तथाकरोति विधत्ते, कां ? कुमार्गप्रवृत्तिं कुदर्शनग्रहमिथ्याभिनिवेशवितथप्ररूपणानुष्ठानादिरूपां महामतीनामपि, आस्तां मुग्धबुद्धीनां, हा इति खेदे मोहोऽज्ञानमेतेन रागद्वेषमोहोपहतानां तत्त्वोपदेशनानर्हत्वमाहेति गाथार्थः ॥ ४३ ॥ तथा च--

॥ मूलम् ॥--अन्नाणंधा मिच्छत्त--मोहिया कुग्गहुग्गगहगहिया ।
मग्गं न नियंति न सद्दहंति चेट्ठंति न य उचियं ॥ ४४ ॥

व्याख्या--अन्धा इवान्धा अज्ञानेनान्धास्तथा मिथ्यात्वेन मोहिता भ्रमितास्तथा कुग्रहोऽसदभिनिवेशः स



॥ ९३ ॥

एवोग्रग्रहो भूतादिस्तेन गृहीता आविष्टास्ते, किं? यथासङ्ख्यं न नियंतित्ति न पश्यन्ति मार्गमात्मना, न श्रद्दधति न बहुमन्यन्ते परोपदिष्टमपि मार्गमेव, न च चेष्टन्ते व्यवहरन्त्युचितमनुरूपं, मार्गस्यैव क्रियाविशेषणमिदं तथाहि-- अज्ञानोपहतात्मनामन्धानामिव सत्त्वानां तत्त्वावलोकनविमुखी शेमुषी, मिथ्यात्ववासनाविपर्यस्तबुद्धीनां दिग्मूढानामिव तत्त्वश्रद्धानबहिःप्लवा मनोवृत्तिः कुदेवादिग्रहावेशवशंवदानामुन्मत्तानामिव सर्वतो हास्यहेतुरसमञ्जसा चेष्टेति गाथार्थः ॥ ४४ ॥ इत्थमवगतसम्यग्ज्ञानादिमोक्षमार्गः सुदुर्जयरागादिदोषजालादुद्विजमानः समुल्लसितवीर्यः कश्चिद्भावमार्गमेव प्रतिपद्यते, तदशक्तिमांश्च प्रतिपन्नद्रव्यस्तवः सर्वविरतिलालसः खलु देशविरतिपरिणाम इति वचनात् सर्वविरतिलालसत्त्वं यथा भावयति तथाह--

॥ मूलम् ॥--ता कइया तं सुदीणं सा सुतिही तं भवे सुनक्खत्तं ।
जम्मि सुगुरुपरतंतो चरणभरधुरं धरिस्समहं ॥४५॥

व्याख्या--यस्मादेव रागादयो विजृम्भन्ते तत्तस्मात् कदा कस्मिन् काले तत्सुदीनं प्रसन्नदिगादि, सा सुतिथिर्नन्दादिका, तत् सुनक्षत्रं पुष्यादि भवेदित्याशिषि सप्तमी, सुन्दरत्वं चैतेषां सकलकल्याणनिबन्धनचरणप्राप्तिहेतुत्वाद्, यस्मिन् दिने तिथौ नक्षत्रे वा सुगुरुपरतन्त्रः सुन्दरधर्माचार्यायत्तः, शोभनत्वं चास्य--धर्मज्ञो धर्मकर्ता च सदा धर्मपरायणः । सत्त्वानां धर्मशास्त्रार्थ--देशको गुरुरुच्यते ॥ १ ॥ इत्यादिलक्षणयोगात्, तत्परतन्त्रताभणनेन च गुर्वायत्ताः सर्वसम्पद इत्यावेदयति, यतोऽभिहितं--णाणस्स होइ भागी थिरयरओ दंसणे चरित्ते य । धन्ना आवकहाए गुरुकुल-

वासं न मुंचंति ॥ १ ॥ अन्यच्च––छट्ठट्ठमदसमदुवा––लसेहिं मासद्धमासखमणेहिं । अकरंतो गुरुवयणं अणंतसंसारिओ होइ ॥ २ ॥ चरणमेव दुर्वहत्वसाम्याद्भरस्तस्य धूर्धुरा तां धरिष्यामि प्रतिपत्स्येऽहमिति गाथार्थः ॥ ४५ ॥ अथ प्रस्तुतार्थसमर्थनायाभीष्टदेवतास्तुतिगर्भसम्बोधनेन मध्यमङ्गलमाविष्कुर्वन् मुग्धजनप्रवादतिरस्कारमाह––

॥ मूलम् ॥––सव्वत्थ अत्थि धम्मो जा मुणियं जिण न सासणं तुम्ह ।
कणगाउराण कणगंव ससिग्धपयमलभमाणाणं ॥ ४६ ॥

व्याख्या––सर्वत्र सर्वेषु कपिलशैवशाक्यादिविविधमतेषु, अस्ति विद्यते धर्म इति विवेकविकलानामभ्युपगमो वर्तते यावत् किं ? यावन्न मुणितं नाधिगतं हे जिन विगलिताशेषरागादिदोष ! जातौ चात्रैकवचनं, शासनं द्वादशाङ्गं तुम्हत्ति युष्माकं व्यक्त्यपेक्षया बहुवचनमनेन जातिव्यक्त्योः कथञ्चिदभेदमाह, किमिव कुत्र केषामित्याह––कनकातुराणां हत्पूरकफलचूर्णभावितात्मनां कनकमिव सुवर्णमिव सर्वेष्टकाकाष्टपाषाणादिष्वस्तीत्यभ्युपगम इतीहापि दृश्यं, किंविशिष्टानां तेषां ? सह सितया शर्करया वर्तत इति ससितं, तच्च तत्पयश्च दुग्धं तदलभमानानामप्राप्नुवतामपिबतामिति तात्पर्यमिति गाथार्थः ॥ ४६ ॥ इति श्रीदेवभद्रसूरिविरचिते दर्शनशुद्धिप्रकरणविवरणे मार्गतत्त्वं तृतीयं समाप्तम् ॥ श्रीरस्तु ॥

---

व्याख्यातं मार्गतत्त्वमधुना मूलद्वारगाथाक्रमप्राप्तं साधुतत्त्वं विव्रियते––सम्बन्धश्च पूर्वेण सहास्य मार्गतत्त्वमभिहितं,

तच्च सुतीर्थमुखाच्छ्रोतव्यं, सुतीर्थं च साधुरिति प्रस्तावात्साधुतत्त्वमत्राभिधीयते, तत्रादौ गाथा—

॥ मूलम् ॥—अट्ठारस जे दोसा आयारकहाए वन्निया सुत्ते ।
ते वज्जंतो साहू पन्नत्तो वीयराएहिं ॥ १ ॥

व्याख्या—सुगमा, नवरं, सूत्रे सिद्धान्ते सामान्येन विशेषतस्त्वाचारकथायां दशवैकालिकषष्ठाध्ययने । तथा साधयति पौरुषेयीभिर्विशिष्टक्रियाभिरपवर्गमिति साधुर्यतिरिति ॥ १ ॥ के एतेऽष्टादश दोषा इत्याह—

॥ मूलम् ॥—पढमं वयच्छक्कं कायच्छक्कं अकप्प गिहिभायणं ।
पलियंकनिसेज्जा चिय सिणाणसोहाविज्जणयं ॥ २ ॥

व्याख्या—प्रथममिति क्रमार्थं, व्रतानां प्राणिवधविरमणादिनां रात्रिभोजनविरमणावसानानां, षट् परिमाणमस्य षट्कमिह च व्याख्यानाद्व्रतानां विराधनानि प्रत्येकं दोषत्वेनावसेयानि एवं कायषट्केऽपि कायानां, पृथिवीकायादीनां षट्कं कायषट्कम् । अथाद्यव्रतविराधनाभणनेनैव कायषट्कविराधनमुक्तार्थमिति चेत्सत्यं, विशेषरूपतयास्य भणनाद्, विशेषाणां तु सामान्यात्कथञ्चिद्भिन्नरूपत्वान्नोक्तसङ्ख्याहानिरपि । अकल्पो द्विविधः, शिक्षकस्थापनाकल्पोऽकल्पस्थापनाकल्पश्च, तत्र शिक्षकस्थापनाकल्पोऽनधीतपिण्डनिर्युक्त्यादिना आनीतमप्याहारादि न कल्पत इति । उक्तं च—
अणहीया खलु जेणं पिंडेसणसेज्जवत्थया एसा । तेणाणियाणि जइणो कप्पंति न पिंडमाईणि ॥ १ ॥ उउबद्धंपि न अनला वासावासासु दोवि नो सेहा । दिक्खिज्जंती सेह ठवणाकप्पो इमो होइ ॥ २ ॥ अकल्पस्थानादकल्पं तु स्वयमेव

वक्ष्यति । दोषत्वं चैतस्य विपर्ययासेवनाद् । गृहिणो भाजनं गृहिभाजनं स्थालकरोटकादि, भोजनाद्यर्थमासेव्यमानमिति गम्यम् । उक्तं च—

कंसेसु कंसपाएसु कुंडमोएसु वा पुणो । भुंजंतोसणपाणाई आयारा परिभस्सइ ॥ १ ॥ कांस्येषु करोटकादिषु, कांस्यपात्रेषु तलिकादिषु, कुण्डमोदेषु हस्तिपादाकारेषु मृन्मयादिषु । इह जकारलोपः प्राकृतत्वात् समाहारत्वाच्चैकत्वमेवमुत्तरत्रापि । पल्यङ्कः प्रतीतः, शयनासनविषयीक्रियमाणमिति गम्यम्, उपलक्षणं चैतत् खट्वामञ्चकास्यन्दिकादीनाम्, यदाह—आसंदीपलियकेसु मंचमासालयेसु वा । अणायरियमज्जाणं आसइत्तु सइत्तु वा ॥१॥ आसन्दपर्यङ्कमञ्चाः प्रतीता, आसालकः समंगकसमन्वित आसनविशेषः, शुषिरत्वं चैतेषु दोषः । निषदनं निषद्याः समयप्रसिद्धा भिक्षागतस्योपवेशनक्रिया, यदवाचि—गोयरग्गपविट्ठस्स निसिज्जा जस्स कप्पइ । इमेरिसमणायारं आवज्जइ अबोहियं ॥१॥ इत्यादि, अपिचेति समुच्चये, स्नानं मज्जनं देशतः सर्वतो वा, उपलक्षणत्वात्कल्करोध्राादिभिरुद्वर्तनञ्च तथा च—वाहिओ वा अरोगी वा सिणाणं जो उ पत्थए । वुक्कंतो होइ आयारो जढो भवइ संजमो ॥१॥ इत्यादि, शोभा विभूषा दशनघर्षणनखघटनरोमकल्पनकेशसमारचनाकालवस्त्रप्रक्षालनादिरूपा, तस्या विवर्जनमेव निवर्जनकमनुष्ठीयमानमिति गम्यम्, यतः— नगिणस्स वावि मुडस्स दीहरोमनहंसिणो । मेहुणाउवसंतस्स किं विभूसाए कारियं ॥१॥ विभूसावत्तियं भिक्खू कम्मं बधइ चिक्कणं । संसारसागरे घोरे जेणं पडइ दुरुत्तरे ॥२॥ इत्यादि । इह चाद्यपट्कद्वयेन मूलगुणाः प्रतिपादिता, अकल्पादिदोषपट्केन तूत्तरगुणा इति गाथार्थः ॥ २ ॥ इह शेषदोषाणां सुज्ञानत्वादकल्पस्थापनाकल्पदोषे तु सति शेष-

दोषाणामपि सम्भवात्सप्रतिपक्षतद्विषयविभागस्य च दुर्ज्ञानत्वात्तमेव विवृणोति--

॥ मूलम् ॥--पिंडं सेज्जं वत्थं पत्तं चारित्तरक्खणट्ठाए ।
अक्कप्पं वज्जेज्जा गिण्हेज्ज कप्पियं साहू ॥ ३ ॥

व्याख्या--पिण्डं समयपरिभाषया चतुर्विधमाहारं, शय्यां वसतिं, वस्त्रमन्तरकल्पादि, पात्रमलाब्वादि, अकल्पमकल्पनीयं वर्जयेत्परिहरेत्। कस्मै ? चारित्ररक्षणार्थाय नियमपरिपालनप्रयोजनाय, तथा गृह्णीयादुपाददीत श्रुतत्वात्पिण्डाद्येव, किंविशिष्टं ? कल्पितमाधाकर्मादिदोषरहितं साधुरिति गाथार्थः ॥ ३ ॥ इह च पिण्डादीनामाधाकर्मादिदोषैरकल्प्यत्वमिति तान् विभणिषुः प्रस्तावनामाह--

॥ मूलम् ॥--जीवा सुखेसिणो तं सिवंमि तं संजमेण सो देहे ।
सो पिंडेण सदोसो सो पडिकुट्ठो इमे ते य ॥ ४ ॥

व्याख्या--जीवाः प्राणिनः सुखैषिणः शर्माभिलाषिणो यदवाचि--सव्वेवि सुक्खकंखी सव्वेवि हु दुक्खभीरुणो जीवा सव्वेवि जीवियपिया सव्वे मरणाओ वीहंति ॥ १ ॥ तत्पुनः सुखं तात्त्विकं शिवे एव सर्वकर्माभावमोक्ष एव, तत्पुनः शिवं संयमेन पूर्वोक्तेन, स पुनः संयमो देहे आधारभूते, शरीरमाद्यं खलु धर्मसाधनमिति वचनात्, स पुनर्देहः पिण्डेन पूर्वोक्तेन, सह दोषैः सदोषः स पुनः पिण्डः प्रतिकुष्टः प्रतिषिद्धः सर्वजिनैरिति गम्यते इमे अनन्तरमेव वक्ष्यमाणतया प्रत्यक्षास्ते पुनर्दोषाः। च पुनरर्थे, सर्वेष्वपि च तच्छब्देषु योज्यते, तेनोचितं चैतदिति गाथार्थः ॥ ४ ॥

प्रस्तावितपिण्डदोपाणां सविभागसङ्ख्यामाह--

॥ मूलम् ॥—सोलस उग्गमदोसा सोलस उप्पायणाए दोसा उ ।

दस एसणाए दोसा बायालीसं इह हवंति ॥ ५ ॥

व्याख्या--पोडशोद्गमनमुद्गम उत्पत्तिः प्रभव इति यावत् , प्रस्तावात्पिण्डस्य, तं दूषयन्तीत्युद्गमदोषाः । तथा पोडशोत्पादनोपार्जना निर्वर्तनेति यावत्, पिण्डस्यैव, तस्यामपि दोपास्तुरप्यर्थः । तथा दश एपणायां गवेषणायां दोषाः, सर्वमीलने यत्स्यात्तदाह--द्विचत्वारिंशदित्येवमुक्तनीतया भवन्तीति गाथार्थः ॥ ५ ॥ तत्र तावदुद्गमदोषानाह--

॥ मूलम् ॥--आहाकम्मुद्देसिय—पूयीकम्मे य मीसजाए य ।

ठवणापाहुडियाए पाओयरकीयपामिच्चे ॥ ६ ॥

परियट्टिए अभिहडु—ब्भिन्ने मालोहडेइ य ।

आच्छिज्जे अणुसिट्ठे झोयर एय सोलसिमे ॥ ७ ॥

व्याख्या--आधाय विकल्प्य यतिं मनसि कृत्वा सचित्तस्याचित्तीकरणमचित्तस्य वा पाको निरुक्तादाधाकर्म १ उद्देशः साध्वर्थं सङ्कल्पः, स प्रयोजनमस्येत्यौद्देशिकं, यत्पूर्वकृतक्षोदकक्षोदादि तत्साधूद्देशेन दध्यादिना गुडपाकेन च संस्कुर्वतो भवति २ पूतं पवित्रं तस्य कर्म, शुद्धस्याप्याधाकर्मिकावयवेन सम्मिश्रीकरणं शुचिद्रव्यस्यैवाशुचिद्रव्येण, अत्रैकारान्तशब्दः प्रथमैकवचनान्तो दृश्यः, चः समुच्चये ३ यदात्मार्थं साध्वर्थं चादित एव मिश्रं जातं पाकभावमुपगतं

तन्मिश्रजातं ४ साधुदानार्थं किंचित्कालं क्षीरादेः स्थापनं स्थापना ॥५॥ कालान्तरभाविन आहारादेरिदानीं सन्निहिताः साधवः सन्ति तेषामप्युपयोगो भवत्विति बुद्ध्या इदानीमेव करणं, समयपरिभाषया प्राभृतिकासन्निकृष्टस्य वा विवाहादेः कालान्तरं साधुसमागमं सञ्चिन्त्योत्कर्षणं वा, एकारः पादपूरणे ॥६॥ अन्धकारव्यवस्थितस्य वह्निप्रदीपमण्यादिना, भित्त्यपनयनेन वा बहिर्निष्कास्य द्रव्यधारणेन वा प्रादुष्करणं प्रादुष्कारः। ह्रस्वता छन्दोवशात् ॥७॥ साध्वर्थं मूल्येन क्रीयते स्मेति क्रीतम् ॥८॥ साध्वर्थमुद्यतकं गृहीत्वा यदन्नादि दीयते तत्प्रामित्यकमिह च क्वचिद्विभक्तिलोपः प्राकृतत्वादिति ॥९॥ ॥६॥ तथा स्वद्रव्यमर्पयित्वा परद्रव्यं तत्सदृशं गृहीत्वा यद्दीयते तत्परिवर्तनम् ॥१०॥ गृहग्रामादेः साध्वर्थमानीतमभिहृतम् ॥११॥ कुतपादिस्थस्य घृतादेर्दानार्थं यन्मृत्तिकाद्यपनयनं तद्भिन्नम् ॥१२॥ मालात्प्रसिद्धाद् , उपलक्षणं चैतद्दुर्ग्राह्यतायास्तेनशिक्यादेर्भूमिगृहाच्च अपहृतमानीतं साधुदानाय मालापहृतम् ॥१३॥ इतिर्वाक्यसमाप्तौ, यदाच्छिद्य परकीयं हठाद् गृहीत्वा स्वामी प्रभुश्चौरो वा ददाति तदाच्छेद्यम् ॥१४॥ गोष्ठीभक्तादि सर्वैरदत्तमननुमतं वा एकः कश्चिद्ददाति तदनुत्सृष्टम् ॥ १५ ॥ स्वार्थमधिश्रयणे सति साधुसमागमश्रवणात्तदर्थं पुनर्यो धान्यावापः सोऽध्यवपूरकः, चः समुच्चये ॥१६॥

षोडश उद्गमदोषा इति प्रकृतमिह च दोषप्रक्रमेऽपि क्वचिद्दोषवतोऽभिधानं, तयोर्भेदविवक्षणादेवमुत्तरत्राप्यवसेयमेते च गृहस्थसम्भवाः साध्वर्थं तेन विधीयमानत्वादितिगाथाद्वयसमासार्थः ॥७॥ अथोत्पादनादोषानाह—

॥ मूलम् ॥—धाईदूइनिमित्ते आजीववणीपगेतिगिच्छाय ।
क्रोहे माणे माया लोभे य हवंति दस एए ॥८॥
पुव्विं पच्छा संथव विज्जामंते य चुन्नजोगे य ।
उप्पायणाए दोसा सोलसमे मूलकम्मे य ॥९॥

व्याख्या—बालस्य क्षीरमज्जनमण्डनक्रीडनाङ्कारोपणकर्मकारिण्यः पञ्चधात्र्यः एतासां कर्म भिक्षार्थं कुर्वतो मुनेर्धात्रीपिण्डः ॥१॥ मिथः सन्देशकथनं दूतत्वं, तत्कुर्वतो भिक्षार्थं दूतीपिण्डः ॥२॥ अतीतानागतवर्तमानकालेषु लाभालाभादिकथनं निमित्तं, तद्भिक्षार्थं कुर्वतो निमित्तपिण्डः ॥३॥ जातिकुलगणकर्मशिल्पादिप्रधानेभ्य आत्मनस्तद्गुणारोपणं भिक्षार्थमाजीवपिण्डः ॥४॥ श्रमणब्राह्मणकृपणातिथिश्वानादिभक्तानां पुरतः पिण्डार्थमात्मान तत्तद्भक्तं दर्शयतो वनीपकपिण्डः ॥५॥ वमनविरेचनवस्तिकर्मादि कारयतो वैद्यभैषज्यादि वा सूचयतः पिण्डार्थं चिकित्सापिण्डः ॥६॥ विद्यातपःप्रभावज्ञापन राजपूजादिख्यापनार्थं क्रोधफलदर्शनं वा भिक्षार्थं कुर्वतः क्रोधपिण्डः ॥७॥ लब्धिप्रशंसोत्तानस्य परेणोत्साहितस्यावमतस्य वा गृहस्थाभिमानमुत्पादयतो मानपिण्डः ॥८॥ नानावेषभाषापरिवर्त्तनं भिक्षार्थं कुर्वतो मायापिण्ड ॥९॥ अतिलोभाद् भिक्षार्थं बहु पर्यटतो लोभपिण्डः ॥१०॥ भवन्ति स्युर्दशैतेऽनन्तरोक्ता उत्पादनादोषा इति योगः ॥८॥ तथा पूर्वसंस्तवं जननीजनकादिद्वारेण, पश्चात्संस्तवं श्वश्रूश्वशुरादिद्वारेणात्मपरवयोऽनुरूपं सम्बन्धं भिक्षार्थं घटयतः पूर्वपश्चात्संस्तवपिण्डः ॥११॥ विद्यां मन्त्रं चूर्णं योगं च भिक्षार्थं प्रयुञ्जानस्य चत्वारो विद्यादि-



॥१०१॥

पिण्डाख्या दोषास्तत्र जपहोमादिसाध्या स्त्रीदेवताधिष्ठाना वा विद्या ॥१२॥ पाठमात्रसिद्धः पुरुषाधिष्ठानो वा मन्त्रः ॥१३॥ चूर्णानि नयनाञ्जनादीन्यन्तर्धानादिफलानि ॥१४॥ पादप्रलेपादयः सौभाग्यदौर्भाग्यकरा योगः ॥१५॥ चशब्दौ समुच्चयार्थौ, उत्पादनायाः पिण्डोपार्जनस्य दोषा दूषणान्येते पञ्चदश षोडशः पुनर्गर्भस्तम्भगर्भाधानप्रसवस्नपनमूलरक्षाबन्धनादि भिक्षार्थं कुर्वतो मूलकर्मपिण्डः ॥१६॥ चः पुनरर्थः प्रयुक्त एव एते च साधुप्रभवा आहारलुब्धेन तेन क्रियमाणत्वादिति गाथासमासार्थः ॥९॥ अथैषणादोषानाह—

॥ मूलम् ॥—संकियमक्खियनिक्खित्त—पिहियसाहरियदायगुम्मीसे ।
अपरिणयलित्तछड्डिय एसणदोसा दस हवंति ॥१०॥

व्याख्या—आधाकर्मादिशङ्काकलुषितो यदन्नाद्यादत्ते तत् शङ्कितं, यं च दोषं शङ्कते तमापद्यते ॥१॥ म्रक्षितं पृथिव्यादिना सचेतनेन सुराशुच्यादिना वाचेतनेनापि गर्हितेन स्पृष्टं करादि, तेन दीयमानं भक्ताद्यपि तथोच्यते ॥२॥ निक्षिप्तं पृथिव्युदकतेजोवायुवनस्पतिषु त्रसेषु च यदचित्तमपि स्थापितम् ॥३॥ पिहितं स्थगितं सचेतनफलादिना ॥४॥ दानभाजनस्थमयोग्यं सचित्तेषु पृथिव्यादिषु निक्षिप्य तेनैव भाजनेन ददतः संहृतम् ॥५॥ बालवृद्धपण्डकवेपमानज्वरितान्धाव्यक्तमत्तोन्मत्तकरचरणनिगडितपादुकारूढकण्डकपेषकभर्जककर्तकालोचकविङ्ककपिञ्जकदलकव्यालोडकभोजकषट्कायविराधका दातृत्वेन प्रतिषिद्धा यावत् स्त्री वेलामासवती गृहीतबाला बालवत्सा वा, एभ्यो ऽन्नादि ग्रहीतु साधोर्न कल्पते ॥६॥ देयद्रव्यं खण्डादि सचित्तेन कणादिना मिश्रं ददत उन्मिश्रम् ॥७॥ देयद्रव्यमचित्तत्वेनापरिणम-

दपरिणतम् ॥८॥ लिप्तं लेपवद्दध्यादि किलैतदपि कारणं विना न ग्राह्यम् , यदाह—घितव्वमलेवकडं लेवकडे माहु पच्छकम्माई ॥ अलेपवतो गुणमाह—नयरसगेहि पसंगो न य भुत्ते वंभपीडा य ॥१॥९॥ घृतादि छर्दयन् यद्ददाति तच्छर्दितं, छर्दमाने घृतादौ तत्रस्थस्यागन्तुकस्य वा सर्वस्य जन्तोर्मधुबिन्दूदाहरणेन विराधनासम्भवात् ॥१०॥ एषु च प्रथमैकवचनान्तता सर्वत्र दृश्या । एषणादोषा एते दश भवन्ति । एते गृहिसाधुप्रभवास्तथैव सम्भवात् , तथेहानुक्ता अपि पञ्च ग्रासैषणादोषाः शिष्यहितायाभिधीयन्ते—संयोजना, प्रमाणातिरिक्तता, अङ्गारो, धूमः, कारणाभावश्च तत्र रसलोभाद् द्रव्यस्य मण्डकादेर्द्रव्यान्तरेण खण्डादिना वसतेर्बहिरन्तर्वा योजनं संयोजना ॥१॥ धृतिबलसंयमयोगा यावता न सीदंति तावदाहारप्रमाणमधिकाहारस्तु वमनाय मृत्यवे व्याधये वेति तत्परिहारात् प्रमाणातिरिक्ततादोषः ॥२॥ स्वाद्वन्नं तद्दातारं वा प्रशंसन् यद्भुङ्क्ते स रागाग्निना चारित्रेन्धनस्याङ्गारीकरणादङ्गारदोषः ॥३॥ निन्दन् पुनश्चारित्रेन्धनं दहनधूमकरणाद्धूमदोषः ॥४॥ क्षुद्वेदनाया असहनं, क्षामस्य च वैयावृत्त्याकरणमिर्यासमितेरशुद्धिः, प्रेक्षोपेक्षादेः, संयमस्य चापलनं, क्षुदातुरस्य प्रबलाग्न्युदयात् प्राणप्रहाणशङ्का, आर्तरौद्रपरिहारेण धर्मध्यानास्थिरीकरणं चेति भोजन कारणानि, तदभावे भुञ्जानस्य कारणाभावो दोषः ॥५॥ एवं सर्वमीलने सप्तचत्वारिंशद्भवन्ति । एतद्विषयविभागप्रतिभेदादिविस्तरार्थिना पिण्डनिर्युक्त्याद्यन्वेषणं विधेयम् , इह तु ग्रन्थगौरवभयान्न कृत इति गाथार्थः ॥१०॥ उक्तदोषविशुद्धस्यैव पिण्डस्य ग्राह्यतां तद्विशुद्धिविषये विशेषं चाह–

॥ मूलम् ॥यद्दोसविमुक्को जईण पिंडो जिणेणणुण्णाओ ।
सेसकिरियाठियाणं एसो पुण तत्तओ नेओ ॥११॥

व्याख्या--एतद्दोषविमुक्त उक्तस्वरूपद्विचत्वारिंशद्दूषणरहितो यतीनां पिण्डो भक्तादिर्जिनैरनुज्ञातो ग्राह्यतयेति प्रक्रम एष पुनर्विशुद्धः पिण्डस्तत्त्वतः परमार्थवृत्त्या, शेषक्रियास्थितानां पिण्डविशुद्ध्यपेक्षया याः शेषक्रियाः स्वाध्याय-प्रत्युपेक्षणादिकास्तासु ये स्थिता आश्रितास्ते तथा तेषां ज्ञेयो, न तु तद्विकलानामुक्तदोषपरिहारमात्रवतां, मूलाभावे उत्तरस्याकिञ्चित्करत्वादिति भाव इति गाथार्थः ॥११॥ ननु गृहस्थेन भवितविहितमाधाकर्म गृह्णंस्त्रिधा शुद्धस्य साधोः को दोष इत्याह—

॥ मूलम् ॥—जस्सट्ठा आहारो आरंभो तस्स होइ नियमेण ।
आरंभे पाणिवहो पाणिवहे होइ वयभंगो ॥१२॥

व्याख्या—यस्य साधोरर्थाय निमित्ताय आहारोऽनशनादिः पच्यत इति शेषः । आरम्भः खण्डनपेषणादिसन्धुक्षणादिव्यापारस्तस्य भवति नियमेन, चस्य गम्यमानत्वादारम्भे च प्राणिवधः, प्राणिवधे च भवति व्रतभङ्गः अयमर्थः—यद्यपि साधोः पचनादौ न व्यापारस्तथापि मम निमित्तं निष्पन्नमिदमिति जानतो निःशूकतया भुञ्जानस्य कथमिव त्रिकरणशुद्धिः स्यात् ? तत्परिभोगतस्तद्व्यानुमतत्वादिति गाथार्थः ॥१२॥ इत्थमुपदिष्टेऽपि यत् क्लिष्टकर्मा आधाकर्म निःशूकतया भुङ्क्ते तस्यानाराधकत्वमाह—

॥ मूलम् ॥ भुंजइ आहाकम्मं सम्मं न जो पडिक्कमइ लुद्धो ।
सव्वजिणाणाविमुहस्स तस्स आराहणा णत्थि ॥१३॥

व्याख्या—भुङ्क्तेऽभ्यवहरति यः साधुराधाकर्म वर्णितस्वरूपं, सम्यग्भावशुद्धया न च नैव प्रतिक्रामति प्रायश्चित्तप्रतिपत्त्या तद्भोजनात् प्रतिनिवर्तते, किंविशिष्टः सन् ? लुब्धो रसनालम्पटो ऽनेन यः कथञ्चित् सकृद्भुक्त्वापि सम्यक् प्रतिक्रामति, यश्चालुब्धो ग्लानादिकारणे भुङ्क्ते तयोराराधकत्वमाह—तस्य द्रव्ययतेः सर्वे च भरतैरवतविदेहजास्ते जिनाश्च तेषामाज्ञा द्वादशाङ्गी तस्यां विमुखः प्रतिकूलस्तस्याराधना परलोकत्वं नास्तीति गाथार्थः ॥ १३ ॥ यद्येवं तर्हि कथमागमे दुर्भिक्षग्लानाद्यागाढप्रयोजने आधाकर्मादिग्रहणमनुज्ञातमित्याह—

॥ मूलम् ॥—संथरणम्मि असुद्धं दुण्हवि गेण्हंतदिंतयाणहियं ।
आउरदिट्ठंतेण तं चेव हियंति निद्दिट्ठं ॥ १४ ॥

व्याख्या—सन्थरणे संस्तरणे प्रासुकैषणीयाहारादिनैव निर्वाहे सत्यशुद्धमनेषणीयं गृह्यमाणं दीयमानं चेति गम्यते, द्वयोरपि, नैकस्य कस्यापि, गृहितृदात्रोः साधुश्रावकयोरहितमनर्थहेतुत्वादपथ्यं स्यादित्येष उत्सर्गः । अपवादतस्तु आतुरो रोगी तस्य दृष्टान्त उदाहरणं, तेन, यथा हि रोगिणः कस्यामप्यवस्थायां पथ्यमपथ्यं, कस्यांश्चित्तु पुनरपथ्यमपि पथ्यं स्यात्, तथा च भिषक्शास्त्रं—

उत्पद्यते हि सावस्था देशकालामयान् प्रति । यस्यां कार्यमकार्यं स्यात् कर्मकार्यं तु वर्जयेत् ॥ १ ॥ अनेन


॥१०५॥

न्यायेन तं चेवत्ति अशुध्धमपि हितमवस्थोचितत्वात् पथ्यं, द्वयोरपीत्यत्रापि योगोऽसंस्तरणेऽनिर्वाहे दुर्भिक्षग्लानाध्वस्थायामित्यर्थः। अयमभिप्रायः—यद्यपीदमाधाकर्माज्ञाभङ्गाद्यनेकदोषकारणं वर्णितं तथापि—सव्वत्थ संजमं संज—माओ अप्पाणमेव रक्खिज्जा। मुच्चइ अइवायाओ पुणो विसोही नयाविरई ॥१॥ काहं अच्छित्तिं अदुवा अहीहं तवोवहाणेसु य उज्जमिस्सं। गणं व नीईइ सारविस्सं सालंबसेवी समुवेइ मोक्खं ॥२॥ सालंबणो पडंतो अप्पाणं दुग्गमेवि धारेइ। इय सालंबणसेवा धारेइज्जइ असढभावं ॥ ३ ॥ अप्पेण बहुमेसिज्जा एयं पंडियलक्खणं। सव्वासु पडिसेवासु एयं अट्ठावयं विउ ॥ ४ ॥ नवि किंचि अणुणायं पडिसिध्धं वावि जिणवरिंदेहिं। एसा तेसिं आणा कज्जे सव्वेण होयव्वं ॥ ५ ॥ इत्याद्यागमाभिज्ञैर्यथावसरं बहुतरगुणलाभाकाङ्क्षया गृह्यमाणं दीयमानं च न दोषयेति गाथार्थः ॥१४॥

अनिर्वाहे अनेषणीयपरिभोगोऽपि हितायेति प्रतिपादितं, तत्किं यथाकथञ्चिदेव नेत्याह—

॥ मूलम् ॥—फासुयएसणिएहिं फासुयओहासिएहिं किं एहिं ॥
पूईए मीसएण य आहाकम्मेण जयणाए ॥ १५ ॥

व्याख्या—प्रगता असवो येभ्यस्तानि प्राशुकानि, तान्यप्येषणीयान्याधाकर्मादिसमस्तदोषरहितानि, तैः प्रथमं तावदिति शेषस्तदलाभे प्राशुक इव भावितैरवभापितं समयसंज्ञया याचितम्, .एतदसम्पत्तौ च क्रीतैस्तदसम्भवेऽपि पूइयेत्ति वचनस्यातन्त्रत्वात् पूतिभिः। एवमुत्तरत्रापि, तदप्राप्तावपि मिश्रकैस्ततोऽप्याधाकर्मभिरिह चकारोऽनुक्तसमुच्चये, ततस्तत्र विधिकुशलेन याचनादोपमवधिं कृत्वा लघुतमलघुतरलघ्वादिदोपाश्रयणेन तावद् गवेषणीयं यावत्पूतिमिश्राधाकर्माणि,

तैरन्नपानादिभिरातुरस्य शरीरसन्धारणा कार्येत्युपस्कारस्तत्रापि यतनया अनागाढप्रयोजने समस्तक्षेत्रे परिभ्रमणेन यथान्यदोषपुष्टस्यालाभे उत्तरोत्तरदोषदुष्टस्य ग्रहणरूपया, आगाढे तु यथाकथञ्चित् सहसैव ग्राह्यमिति भाव इति गाथार्थः ॥ १५ ॥ नन्वाधाकर्मभोजिनः पूर्वमाज्ञाभङ्गः प्रतिपादितः, साम्प्रतं पुनर्यतनावतस्तदेवानुज्ञायत इति कथं न व्यभिचरतीत्याह—

॥ मूलम् ॥—उस्सग्गेण निसिद्धाणि जाणि दव्वाणि संथरे जइणो ।
कारणजाए जाए अववाए ताणि कप्पंति ॥ १६ ॥

व्याख्या—उत्सर्गः सामान्योक्तो विधिस्तेन निषिद्धानि निवारितानि यानि द्रव्याणि सचेतनाचेतनादीनि संस्तरे द्रव्यापदादिविरहे यतेः साधोस्तानि, किं कारणजाते द्रव्यापदादिहेतुसमूहे जाते समुत्पन्ने सति अपवादे द्वितीयपदे कल्पन्ते संयमोपकाराय भवन्ति । तदयमभिप्रायः—पूर्वसूत्राण्युत्सर्गविषयाणि एतत्पुनरपवादविषयमिति भिन्नविषयत्वान्न विरोध इति गाथार्थः ॥ १६ ॥ अथापवादः किंस्वरूपो भवतीत्याह—

॥ मूलम् ॥—पुढवाइसु आसेवा उप्पन्ने कारणंमि जयणाए ।
मिगरहियस्स ठियस्स अववाओ होइ णायव्वो ॥ १७ ॥

व्याख्या—पृथिव्यादिषु, षष्ठीसप्तम्योरर्थे प्रत्ययभेदात् पृथिव्यप्तेजोवायुवनस्पतित्रसादीनामुत्पन्ने कारणे भणितस्वरूपे यतनया गुरुदोषत्यागेन लघुदोषाश्रयणरूपया आसेवा परिभोगोऽपवादो भवतीति ज्ञातव्य इति सण्टङ्कः । कस्य

सेवास्थितस्य, मूलोत्तरगुणेषु दशविधकल्पे वा वर्तमानस्य साधोरिति गम्यते । किंविशिष्टस्य मृगा अज्ञा अगीतार्था इत्यर्थस्तै रहितस्य, ते हि तदासेवामवलोक्यातिपरिणामकत्वाभ्यामतिप्रसङ्गं धर्मभ्रंशं वा लभेरन्निति गाथार्थः ॥ १७ ॥

अधुना बहुविषयोत्सर्गापवादपरिज्ञानतः कृत्योपदेशमाह--

॥ मूलम् ॥--बहुवित्थरमुस्सग्गं बहुविहुविहमववायवित्थरणं ।
णाउं लंघेउ पुत्तविहिं बहुगुणजुत्तं करेज्जाहि ॥ १८ ॥

व्याख्या--पूर्वार्द्धं सुगमं, नवरं ज्ञात्वा निशिथादिग्रन्थेभ्यः, लङ्घयित्वा विगाह्याल्पबहुगुणत्वे तुलयित्वेति यावत् । उक्तविधिमुत्सारककल्पाभिहितन्यायं बहुगुणयुक्तं प्रभूतगुणसम्पन्नं कुर्याः, कृत्यमिति गम्यते अत एवोक्तमागमे-- जावज्जीवं गुरुणो सुद्धमसुद्धेण होइ नायव्वं । वसहे बारसवासा अट्ठारस भिक्खुणो मासा ॥१॥ इति गाथार्थः ॥१८॥

उक्तः सप्रसङ्गपिण्डविचारः, सम्प्रति शय्याशुद्धिमाह--

॥ मूलम् ॥--मूलोत्तरगुणसुद्धं थीपसुपंडविवज्जियं वसहिं ।
सेविज्ज सव्वकालं विवज्जए हुंति दोसाओ ॥ १९ ॥

व्याख्या--गुणशब्दस्य प्रत्येकमभिसम्बधान्मूलगुणोत्तरगुणशुद्धां स्त्रीपशुपण्डकविवर्जितां वसतिं सर्वकालं सेवस्व, विपर्यये पुनर्भवन्ति दोषा इति सङ्क्षेपार्थः ॥ १९ ॥

तत्र मूलगुणाः--

॥ मूलम् ॥––पिट्ठीवंसो दोधार––णाओ चत्तारि मूलवेलीओ ।
मूलगुणे हुववेया एसा उ अहागडा वसही ॥ २० ॥

व्याख्या––तत्र पिट्ठीवंशो मोभ इति लोके यः प्रतीतः, द्वे धारण्यौ यत् प्रतिष्ठितौ, असावेव, चतस्रो मूलवेलयश्चतुर्षु कोणेषु निधीयन्ते, एते सप्तापि मूलगुणास्तैश्च साधुमाधाय कृतैरुपेता युक्ता एषा, तुशब्द एवकारार्थः । आधाय कृता आधाकर्मिक्येव वसतिरिति । उत्तरगुणाश्च द्विविधा मूलोत्तरगुणा उत्तरोत्तरगुणाश्च, तत्र मूलोत्तरगुणाः––वंसग १ कडणु २ कंवण ३ च्छायण ४ लेवण ५ दुवार ६ भूमीए ७ । सपरिकम्मा वसही एसा मूलोत्तरगुणेसु ॥ १ ॥ अत्र वृद्धसंप्रदायः––वंसगत्ति दण्डकाः, कडणंति कटादिभिः कटयकरणं, उक्कंवणति दण्डकोपरि उडयणमिति प्रतीतं, च्छायणं दर्भादिभिराच्छादनं, लेवणंति विक्खल्लेण कुड्डाणलिंपणं, दुवारत्ति गृहद्वारस्य बाहल्यकरणमन्यस्य वा विधानं, भूमित्ति भूमिकर्म, विसमाए समीकरणंति वुत्तं होइ, एसा परिकम्मा वसही मूलोत्तरगुणेसुत्ति मूलोत्तरगुणेष्वित्यर्थः ।

एते च पृष्टिवंशादयश्चतुर्दशाप्यविशोधिकोटिः । अमी पुनरुत्तरोत्तरगुणा विशोधिकोटिस्थिता वसतेरुपघातकरास्तद्यथा––दूमिय धूवियवासिय उज्जोवियबलिकडाअवत्ताय । सित्तासम्मट्ठाविय विसोहिकोडिं गया वसही ॥ १ ॥ अत्रापि वृद्धव्याख्या––दुमियमित्ति उल्लाइया सेढिकादिभिः संमृष्टेत्युक्तं भवति । धूवियत्ति दुर्गन्धत्वादगुरुप्रभृतिभिः । वासिताः पुटवासकुसुमादिभिः । उद्योतिता रत्नप्रदीपादिभिः प्रकाशिता, बलिकडत्ति कृतकूरादिबलिविधाना, अवत्तत्ति

छगणमृत्तिकाभ्यां जलेन चोपलिप्तभूमितला, सिक्ता केवलोदकेनार्द्रीकृता, संमृष्टा प्रमार्जिता, साध्वर्थायेति सर्वत्र प्रक्रमः। विशोधिकोटिंगयत्ति अविशुद्धकोटौ न भवतीत्यर्थ इति। एतदनुसारतश्चतुः शालादिष्वपि मूलोत्तरगुणविभागो भावनीयः, साक्षात्तद्भणनन्तु प्रायेण यतीनां ग्रामेषु विहारस्तेषु चैवंविधासतेरसम्भवादिति। अन्ये चामी वसतिदोषाः--

कालाइक्कंतु १ वठाणा २ अभिकंत ३ मणभिकंताय ४। वज्जाय ५ महावज्जाय ६ सावज्ज ७ मह ८ अप्पकिरिया य ९॥ १ ॥ मासे चतुर्मासे वा पूर्णे तत्रैव वसतां कालातिक्रान्तता, मासकल्पे वर्षाकाले वा पूर्णेऽन्यत्र विहृत्य द्वावष्टौ च मासान् पूरयित्वा तस्यामेव गच्छतामुपस्थापना भवति, यावदर्थिकार्थं निष्पन्नान्यैश्चरकादिपाखण्डिभिर्गृहस्थैर्वा निषेविताति-क्रान्ता तदनासेविता त्वनतिक्रान्ताति आत्मार्थं कृतां साधुभ्यो दत्वा स्वयमन्यां कुर्वतो वर्ज्या। यदाह--

अत्तट्ठकडं दाउं जईणमन्नं करेइ वज्जा उ। जम्हा तं पुव्वकडं वज्जेइ तओ भवे वज्जा ॥ १ ॥ तथा श्रमणब्राह्मणादीनां पाखण्डिकानामर्थाय कृता महावर्ज्या, निर्ग्रन्थादीनां तु पञ्चानां श्रमणानामर्थाय कृता सावद्या, जैनमुनीनामर्थाय कृता महासावद्या, आह च--पासंडकारणा खलु आरंभो अहिणवो महावज्जा समणट्ठा सावज्जा महसावज्जा य साहूणं ॥ १ ॥ इमेऽष्टौ दोषाः। या तु समस्तोक्तदोषवर्जिता स्वार्थे जिनबिम्बप्रतिष्ठार्थे वा कारिता साल्पक्रिया शुद्धेत्यर्थः। अयं तु दोषपद्धतिपठितोऽपि गुणोऽल्पशब्दस्याभाववाचकत्वादिति। तथा स्त्रीवर्जिता यत्र स्त्रियो मिथः कथादिभिः स्थानं न विदधति, यस्यां च स्थिते स्त्रीणां ध्वनिर्न श्रूयते, ता अपि साधुमधुरस्वाध्यायध्वनिं नाकर्णय-न्तीति अत्र गाथा--थीवज्जियं वियाणह इत्थीणं जत्था ठाणरूवाइं। सद्दा य न सुयंति तावि य तेसिं न पेच्छंति ॥ १ ॥

ताणं चेट्ठंति जहिं मिहो कहाइहिं नवरमित्थीओ। वोणे नियमारूवं सिय सदो जेण तो वज्जे॥ २॥ विप्रकृष्टे कदाचिच्छब्दो न स्यादपीति स्यादित्युक्तं--चंकम्मियं ठिइ मोट्टि--यं च विपिक्खियं च सविलासं। सिंगारे य बहुविहे दट्ठुं भत्तेयरे दोसा ॥ ३॥ मोट्टियंति केलिकलाञ्चितमित्यर्थः। भुत्तेतरत्ति भुक्ताभुक्तभागयोर्दोषाः स्मृतिकुतूहलादयः। जल्लमलपंकियाणवि लावण्णसिरी उ जहसि देहाणं। सामण्णेवि सुरूवा सयगुणिया अस्सि गिहवासे॥ ४॥ गीयाणि य पढियाणि य हसियाणि य मंजुले य उल्लावे। भूसणसद्दे राह--स्सिए य सोऊण जे दोसा॥ ५॥ गंभीरमहुरफुडविसय--गाहगो सुस्सरोसरोजहसिं। सज्झायस्स मणहारा--गेयस्सणु केरिसो होज्जत्ति॥ ६॥ तथा पशुवर्जिता, गोगर्दभीवडवादिपशुस्त्रीतत्पुरुषरहिता, तथा पण्डकवर्जिता नपुंसकरहिता विपर्यये दोषा दूषणानि, ते च व्यक्ता एव। तत्र मूलोत्तरगुणादशुद्धायामाधाकर्मादयः, स्त्रीसहितायां तु ब्रह्मव्रतागुप्त्यादयः। यदाह--

बंभवयस्स अगुत्ती लज्जाणासो य पीइवुड्ढी य। साहु तवोवणवासो निवारणं तित्थहाणी य॥१॥ लज्जानाशोऽसकृत्परस्परदर्शनेन, प्रतिवृद्धिश्च नित्यमालापविश्रम्भकथादिसम्भवात्, साधु तपो वनवास इति लोके तीर्थहानिर्लोकाप्रवृत्तितः। इति पशुपण्डकसहितायामपि चित्तक्षोभाभिघातादयः। अभ्यधायि च--पसुपंडगेसु वि इहं--मोहानलदीवीयाण जं होइ। पायमसुहा पवित्ती पुव्वभवब्भासओ तहया॥१॥ अज्ञानादयश्च दोषाः सर्वत्रापि समा एव, तस्मादुक्तदोषवर्जितैव वसतिरासेव्या, यदाह--तम्हा जहुत्तदोसेहिं वज्जियं निम्ममो निरासंसो। वसहिं सेविज्ज जई विवज्जए याणईणित्ति॥१॥ इति गाथार्थः॥१५॥ अथ क्रमप्राप्तां वस्त्रशुद्धिमाह--

॥ मूलम् ॥ जं न तयट्ठा कीयं नेय वूयं गहियमन्नेणं ॥
आहडपामिच्चं व—ज्जिउण तं कप्पए वत्थं ॥२१॥

व्याख्या—यत्र तदर्थं प्रस्तावात्साधुनिमित्तं क्रीतं मूल्येन गृहीतं, नैव व्यूतमातानवितानादितन्तुक्रियया निर्वर्त्तितं नैव गृहीतमन्येन वस्त्रान्तरेण परिवृत्त्येत्यर्थः, पञ्चम्यर्थे वा तृतीया, ततश्चान्यस्माद् भृत्यादेराच्छिद्येत्यर्थः, साध्वर्थमितीहापि गम्यं, तद्वस्त्रं कल्पत इति योगः, प्रस्तावाद्यतिनां किंकृत्वा ? वर्जयित्वा, किं ? आहृतप्रामित्यं विशेषणोभयपदकर्मधारयश्चात्र, इह च पिण्डवदुद्गमोत्पादनैषणादयोऽपि दोपा यथासम्भवमवसेया यत्तु क्रीतादिदोषभणनं तद्वाहुल्येनामीषां सम्भवात् ।

इह मूलोत्तरगुणविभागश्चैवं—तणविणणसंजयट्ठा मूलगुणा उत्तरा य पाणसयणत्ति । पूर्वार्द्धम् , अस्य व्याख्या—तननवितननादयो मूलगुणा अविशोधिकोटिः, पानसज्जनादयश्चोत्तरगुणा विशोधिकोटिरिति । अत्र तानवितानयोरसावद्यत्वादुत्तरगुणत्वं पानसज्जनयोश्च सावद्यत्वान्मूलगुणत्वं युक्तमिति परः । आचार्य आह—अत्तट्ठियतंतूहिं समणट्ठ तओ अपाइयतुओ य । किं सो न होइ कम्मं फासूणवि पज्जिओ जो उ ॥१॥ फासूणविति स्वार्थविहितेनापीत्यर्थः । जइपज्जणं तु कम्मं इयरमकम्मं सकप्पऊ धोउ । अह धोउवि न कप्पइ तणणं विणणं च तो कम्मत्ति ॥१॥ इत्थं मूलोत्तरगुणशुद्धमौर्णिककार्पासिकादिभेदभिन्नं यद्वस्त्रं दायकेनोपढौकितं भवति, तद् द्वयोरप्यन्तयोर्गृहीत्वा सर्वतो निरीक्षणीयं, मा तत्र गृहिणां मणिर्वा सुवर्णं वान्यद्वा रूपकादिद्रव्यं निबद्धं स्यात्, ततः सोऽपि गृहस्थो भण्यते निरी-

क्षस्य एतद्वस्त्रं सर्वतः, एवं च तेन यदि मण्यादि दृष्टं ततो लष्टं, अथ न पश्यति ततः साधुरेव दर्शयति एनमपनयेति आह–गृहिणः कथिते कथमधिकरणं न भवति ? उच्यते––कथिते स्तोकतर एव दोषः । अकथिते तूड्डाहादिर्महान् दोप इति तथा––नवभागकप्पणाए पढमं वत्थं करिउ, जोयंति । णाऊण फलविसेसं गिण्हंति अहव वज्जंति ॥ १ ॥ चत्तारि देविया भागा दुवे भागा य माणुसा । आसुरा य दुवे भागा मज्जे वत्थस्स रक्खसो ॥२॥ अंजणखंजणकद्दमलित्ते मूसगभक्खिय अग्गिविदड्ढे । तुण्णिय कोट्टिय पज्जवलीढे होइ विवागो असुहो सुहो वा ॥३॥ देवेसु उत्तमो लाभो माणुसेसु य मज्जिमो । आसुरेसु य गेलन्नं मज्झे मरणमाइक्खे ॥४॥ इति सप्रसङ्ग इति गाथार्थः ॥२१॥ अथ पात्रशुद्धिमाह––

॥ मूलम् ॥ तुंबयदारुमट्टिय––पत्तं कम्माइदोसपरिमुक्कं ।
उत्तममज्झजहण्णं जईणं भणियं जिणवरेहिं ॥२२॥

व्याख्या––तुम्बकमलाम्बु, दारुकं काष्ठं, मृत्तिका पृथ्वीविशेप एतेषां द्वन्द्वः । तासां पात्रं भिक्षाभाजनं, किंविशिष्टं ? कर्मादिदोपपरिमुक्तं, सूचकत्वात्सूत्रस्य, आधाकर्मादिदूपणजालविकलं, यतीनां भणितं जिनवरैस्तीर्थकृद्भिः । एतदेकैकं किंविशिष्टमित्याह––उत्तममध्यमजघन्यं, तत्रोत्तमं पतद्ग्रहः मध्यममात्रं जघन्यमोलंककादि अन्ये पुनस्तुम्बकमयादीनां यथासङ्ख्यमुत्तमादिविभागं कल्पयन्ति पुनरेकैकं यथा कृताल्पकर्मपरिकर्मसपरिकर्मरूपतया त्रिधावसेयम् । इह च पूर्वपूर्वस्यालाभे उत्तरस्योत्तरस्य ग्रहणं विधेयम् । मूलोत्तरगुणविभागश्च तुम्बकमाश्रित्येत्थं––मुहकरणं मूलगुणा



॥११३॥

पाए निक्कोरणं तु इयरेउ । इति गाथादलं सुगममेव दारुमयादिषु तु स्वयमभ्युह्यः । तच्च गृह्णन्नमुं विधिं प्रयुङ्क्ते-- दाहिणकरेण कोणे घेत्तुत्ताणेण वाममणिबंधं । खोडेइ तिन्नि वारे तिन्नि तले तिन्नि भूमीए ॥१॥ ततश्च--ते सबीयाइं दट्ठुं न गेण्हइ गेण्हई य अदिट्ठे । गहणंमि उ परिसुद्धे कप्पइ दिट्ठेहिं विवज्जाहि ॥१॥ उत्तरार्धस्यायं भावार्थः--ग्रहणकाले परिशुद्धे पश्चाद्यदि बहून्यपि बीजानि पश्यति तथापि गृह्णात्येव, न परिष्ठापयति प्रत्यर्पयति वा, किन्तु यतनया तान्येव स्फेटयति यत्र न विराध्यन्ते तत्र च क्षिपतीति गाथार्थः ॥२२॥ चतुष्टयशुद्धिमधुनोपसंहरन्नेतामनुतिष्ठन्नेव साधुर्भवतीत्याह--

॥ मूलम् ॥ एसा चउक्कसोही निद्दिट्ठा जिणवरेहिं सव्वेहिं ।
एयं जहसत्तीए कुणमाणो भण्णए साहू ॥२३॥

व्याख्या--व्यक्तार्था, नवरं सर्वैरिति समस्तक्षेत्रकालभाविभिरनेन सकलसर्ववित्सम्मतत्वेन व्रततत्त्वमसावेवेत्यावेदयति यथाशक्तीत्यनेन तु क्वचित्कारणमाश्रित्याशोधयत्यपि शुद्ध इति सूचयतीति ॥२३॥ यदनुष्ठायी यतिस्तदुक्तमधुना यथा न भवति तथाह--

॥ मूलम् ॥ उद्दिट्ठकडं भुंजइ छक्कायपमद्दणो घरं कुणइ ।
पच्चक्खं च जलगए जो पियइ कहन्नु सो साहू ॥२४॥

जे संकिलिट्ठचित्ता माइट्ठाणंमि निच्च तल्लिच्छा ।
आजीवगभयगत्था मूढा नो साहुणो हुंति ॥२५॥

व्याख्या--उद्दिष्टमुद्देशः साध्वपेक्षा, तेन कृतमुद्दिष्टमाधाकर्मादि, तद् भुङ्क्तेऽभ्यवहरति आकुट्टिकया, तथा षट्कायमर्दनो यत्र क्वचन पृथिव्याद्युपमर्दको गृहं करोति, सम्भवत्येव एषणीयालये मूर्छया वसतिं भाटकगृहं वा देवादिव्याजतो वा तथा प्रत्यक्षं चोपलभ्यमान एव जलगतांस्तोयाश्रितानप्कायिकादीन् यः पिबत्युपजीवत्याकुट्टिकया, कथं नु स साधुर्नैव भावयतिरिति ॥२४॥ तथा ये केचन बहुश्रुता अपि सङ्क्लिष्टचित्तास्तीव्ररागद्वेषोपहतचेतसो गुणेष्वपि मत्सरिणः क्वचिद्दोषेऽप्यनुरागिणो मातृस्थाने बहिस्तत्तत्क्रियानेपथ्यभाषणादिके परवञ्चने नित्यं सर्वकालं तस्मिन्नेव परवञ्चने लिप्सवो बद्धातिसन्धय आजीविकाभयग्रस्ता वृत्तिव्यवच्छेदभीरवो, ह्रस्वत्वं प्राकृतत्वात् । अत एव मूढाः प्रबलमोहवशवर्त्तिनो नो नैव साधवो भवन्तीति गाथाद्वयार्थः ॥२५॥ साध्वसाधुस्वरूपमभिहितमधुना पुनः साधुतत्त्वं प्रतिपादयन्नुपदेशमाह--

॥ मूलम् ॥ सीलंगाण सहस्सा अट्ठारस जे जिणेहिं पन्नत्ता ।
जो ते धरेइ सम्मं गुरुबुद्धी तम्मि कायव्वा ॥२६॥

व्याख्या--अक्षरार्थः सुगमो, नवरं, शील्यतेऽभ्यस्यते विधिप्रतिषेधरूपतयेति शीलं चारित्रं, तस्याङ्गान्यंशास्तत्समुदायरूपत्वात्तस्य तेषां सहस्राण्यष्टादश, कथं पुनरेकविधस्य शीलस्याङ्गानामष्टादशसहस्राणि ? उच्यते--जोगे

करणे सण्णा इंदिय भोम्माइ समणधम्मे य। सीलंगसहस्साणं अट्ठारसगस्स निप्पत्ती ॥१॥ व्याख्या——योगः करण-कारणानुमतिरूपस्त्रिधा, तस्मिन् विषयभूते करणं मनोवाक्कायरूपं त्रिधा, तत्र संज्ञादीनि चत्वारि पदानि द्वन्द्वैकत्ववन्ति तत्र संज्ञा आहारभयमैथुनपरिग्रहस्वरूपाश्चतस्रस्तासु इन्द्रियाणि श्रोत्रचक्षुर्घ्राणरसनस्पर्शनलक्षणानि पञ्च तेषु भूमिरादि-र्यस्य गणस्य भूम्यादिः, पृथिव्यप्तेजोवायुवनस्पतिद्वित्रिचतुःपञ्चेन्द्रिजीवरूपो दशपदस्तपोदशपदस्तत्र श्रमणधर्मः क्षान्तिमार्दवार्जवमुक्तितपःसंयमसत्यशौचाकिञ्चन्यब्रह्मरूपो दशविधः। तस्मिंश्च शीलाङ्गसहस्राणामष्टादशकस्य निष्पत्ति-स्तथाहि–न हन्ति मनसा आहारसंज्ञासंवृतः श्रोत्रेन्द्रियसंवरणः पृथिवीजीवान् क्षान्तिसम्पन्न इत्येकं शीलाङ्गम् एवं मार्दवादिपदयोगेनापि पृथिवीकायाभिलापेन दश शीलाङ्गविकल्पाः स्युः। एवमप्कायाद्यभिलापैरपि दशदशमीलितं जातम् शतम्, एतच्च श्रोत्रेन्द्रियेण लब्धम्, एवं प्रत्येकं चक्षुरादिभिरपि, जातानि पञ्च शतानि, एतानि आहारपदेन गुण्यमानेन लब्धानि, एवं भयादिसंज्ञाक्रांताभिरपि जाते द्वे सहस्रे, एतावच्च मनसा लब्धं, एवं वाक्कायाभ्यामपि, जातानि षट् सहस्राणि, एतानि स्वयं करणेन, एवं कारणानुमतिभ्यामपि, प्रत्येकं षट् षट् सहस्राणि, सर्वमीलने जातान्यष्टा-दशसहस्राणि स्युः। यदा तु द्व्यादिसंयोगजन्या इह क्षिप्यन्ते भेदास्तदा बहवोऽपि स्युस्तथाहि——

एकद्व्यादिसंयोगेन योगेषु सप्त विकल्पाः, एवं करणेषु संज्ञासु पञ्चदश, इन्द्रियेष्वेकत्रिंशत्, भूम्यादिषु त्रयोविंश-त्यधिकसहस्रम्, एवं क्षमादिष्वपि, इत्येषां च परस्पराभ्यासे द्वे कोटीसहस्रे, त्रीणि कोटीशतानि, चतुरशीतिकोटीनामे-कपञ्चाशल्लक्षाणि, त्रिषष्टिसहस्राणि, द्वे शते, पञ्चषष्टिश्चेति, अङ्कतोऽपि २३८४५१६३२६५. ततः किमष्टादशैव सह-

स्राण्युक्तानि ? उच्यते—यदि श्रावकधर्मवदन्यतरभङ्गकेन सर्वविरतिप्रतिपत्तिः स्यात्तदा युज्येत तद्वर्णनं, न चैवमेकतरस्यापि, शीलाङ्गभङ्गकस्य शेषसद्भाव एव भावाद्, अन्यथा सर्वविरतिरेव न स्याद्, अभ्यधायि च–इत्थे इमं विन्नेयं अईयं पज्जंतु वुद्धिमंतेर्हि । एक्कंपि सुपरिसुद्धं सीलंगं सेससब्भावे ॥१॥ तथा—एक्को वायपएसोऽसंखेयपएसो संगओ-जहउ । एयपि तहा नेयं सतत्तचाओ इहरहाउ ॥ १ ॥ इति गाथार्थः ॥ २६ ॥ अत एव च—

॥ मूलम् ॥—उणत्तं न कयाइवि माणसंखं इमं तु अहिगिच्च ।
जं एयधरा सुत्ते णिद्दिठा वंदणिज्जा उ ॥ २७ ॥

व्याख्या —उनत्वमेकादिभिर्हीनत्वं नैव कदाचिदपि दुःपमादावपि एतेपां शीलाङ्गानां सङ्ख्यां परिमाणमिमामेतामष्टादशसहस्रलक्षणां तुरेवकारार्थो योजित एव, अधिकृत्याश्रित्य, कुत एतदित्याह—यद्यस्मादेतद्धरास्तु अष्टादशशीलाङ्गसहस्रधारिण एव सूत्रे प्रतिक्रमणाख्ये निर्दिष्टा उक्ता वन्दनीया नमस्कारार्हा, नान्ये 'अट्ठारससहस्ससीलंगरहस्सधरा' इत्यादिवचनप्रामाण्यादयमपि, तुशब्द एवकारार्थः प्राग्योजितश्चेति गाथार्थः ॥ २७ ॥ उक्तमेवार्थं किंचिद्विशिष्टमाह—

॥ मूलम् ॥—पंचविहायाररओ अट्ठारससहस्सगुणगणोवेओ ।
एस गुरू मह सुंदर भणिओ कम्मट्ठमहणेहिं ॥ २८ ॥

व्याख्या—पञ्चविधः पञ्चप्रकार आचारो व्यवहारः, स च ज्ञानदर्शनचारित्रतपोवीर्यविषयस्तत्र रतः सक्तः स्वयमासेवनतोऽन्योपदेशतश्च प्रागभिहितशीलाङ्गलक्षणाष्टादशसहस्रगुणगणोपेत, एवंविशिष्टे गुरौ जातहर्षः ।शिष्यं प्रत्याह


॥११७॥

ग्रन्थकारः, हे सुन्दर गुणानुरागप्रधान एष गुरुर्मम भणितः कर्माष्टमथनैर्जिनैः । इह विशेषणपरनिपातः प्राकृतत्वादिति गाथार्थः ॥ २८ ॥ तदियता सामान्येन साधुस्वरूपमुपवर्ण्य साम्प्रतं विचित्रषट्त्रिंशिकाभिराचार्यगुणाभिधित्सया गाथाकदंबकमाह--

॥ मूलम् ॥--अट्ठविहा गणिसंपय चउग्गुणा नवरि हुंति बत्तीसं ।
विणओ य चउब्भेओ छत्तीसगुणा इमे तस्स ॥ २९ ॥

व्याख्या--गणःसमुदायो गुणानां साधूनां वा यस्यास्ति सगणी, अतिशायी व्वाचार्यस्तस्य सम्पत्समृद्धिर्भावरूपा गणिसम्पद् अष्टविधाष्टप्रकारा, आचारश्रुतशरीरवचनवाचनामतिप्रयोगमतिसङ्ग्रहपरिज्ञाभेदाद् नवरं केवलं चतुर्गुणाः प्रतिभेदं चतुर्भिराहता द्वात्रिंशद् भवन्ति सूरिगुणा इति योगस्तत्राचरणमाचारोऽनुष्ठानं, स एव सम्पद्विभूतिस्तस्य वा सम्पत्सम्पत्तिराचारसम्पत्, सा चतुर्धा, तद्यथा--

संयमध्रुवयोगयुक्तता चरणे नित्यं समाध्युपयुक्ततेत्यर्थः १ । असंप्रग्रह आत्मनो जात्याद्युत्सेकरूपग्रहवर्जनमिति भावः २ । अनियतवृत्तिरनियतविहार इत्यर्थः ३ । वृद्धशीलता वपुर्मनसोर्निर्विकारतेति यावदिति ४ । एवं श्रुतसम्पत् सापि चतुर्धा, तद्यथा--बहुश्रुतता युगप्रधानागमतेत्यर्थः १; परिचितसूत्रता उत्क्रमक्रमवाचनादिभिः स्थिरसूत्रता २; विचित्रसूत्रता स्वसमयादिभेदात् ३; घोषविशुद्धिकरणता उदात्तादिविज्ञानादिति ४ । शरीरसम्पच्चतुर्धा; तद्यथा--आरोहपरिणाहयुक्तता उचितदैर्ध्यादिविस्तरतेत्यर्थः १; अनवत्रप्यता अलज्जनीयाङ्गतेत्यर्थः २; परिपूर्णेन्द्रियता अनुपहतचक्षुरा-

दिकरणता ३; स्थिरसंहननता तपःप्रभृतिषु शक्तियुक्ततेति ४ । वचनसम्पच्चतुर्धा, तद्यथा--आदेयवचनता १. मधुरवचनता, सरसवाक्यता २. अनिःश्रितवचनता, मध्यस्थवचनतेत्यर्थः ३. असन्दिग्धवचनता, परिस्फुटवचनतेत्यर्थः ४ । वाचनासम्पच्चतुर्धा, तद्यथा-विदित्वोद्देशनं, परिणामिकादिकं शिष्यं ज्ञात्वेत्यर्थः १; विदित्वा समुद्देशनं २; परिनिर्वाप्य-वाचना, पूर्वदत्तालापकानधिगमय्य शिष्यं पुनः सूत्रदानं ३, अर्थनिर्यापणा अर्थस्यपूर्वापरसाङ्गत्येन गमनिकेति ४ । मतिसम्पच्चतुर्धा, तद्यथा-अवग्रह १ ईहा २ अपाय ३ धारणा ४ भेदादिति । प्रयोगमतिसम्पच्चतुर्धा, तद्यथा--इह प्रयोगो वादमुद्रा, तत्रात्मपरिज्ञानं वादादिसामर्थ्यविषये १; पुरुषपरिज्ञानं किं नयोऽयं वाद्यादि २, क्षेत्रपरिज्ञानं किमिदं मायाबहुलमन्यथा वा, साधुभिर्भावितमभावितं वेति विमर्शनं ३, वस्तुपरिज्ञानं वस्तु वादकाले राजामात्यादिरिति ४ । सङ्ग्रहपरिज्ञा, सङ्ग्रहः स्वीकरणं, तत्र परिज्ञा ज्ञानमष्टमीसम्पच्चतुर्धा, तद्यथा—बालादियोग्यक्षेत्रविषया १; पीठफलकादिविषया २; यथासमयं स्वाध्यायभिक्षाविषया ३; यथोचितविनयादिविषया चेति ४ । तथा विनयश्चतुर्भेदः, स च—आयारे सुयविणए विक्खिवणे चेव होइ बोधव्वे । दोसस्स य निग्घाए विणए चउहे एस पडिवत्ति ॥ १ ॥ इत्येतद्गाथातोऽवसेयः। तत्र आचारविनयः संयमतपोगणैकाकिविहारविषयचतुर्विधसामाचारीस्वरूपस्तत्र पृथ्वीकायरक्षादिसप्तदशपदेषु स्वयंकरणान्यकारणसीदत्स्थिरीकरणयतमानोपबृंहणात्मिका संयमसामाचारी १; पाक्षिकाष्टमीचतुर्दश्यादिषु द्वादशविधतपसि स्वपरयोर्व्यापाररूपा तपःसामाचारी २; प्रत्युपेक्षणादिषु बालग्लानादिषु वैयावृत्त्यादिषु च विषीदद्गण-प्रवर्तनस्वयमुद्यमनस्वभावा गणसामाचारी ३; एकाकीविहारप्रतिमायाः स्वयमङ्गीकरणान्याङ्गीकारणलक्षणैकाकिविहारसा-

॥११९॥

माचारीति ४ ॥ १ ॥

श्रुतविनयः—सूत्रग्राहण १ अर्थश्रावण २ हित ३ निःशेषवाचनात्मकश्च ४, हितं योग्यतानुसारेण वाचयतो निः शेषमापरिसमाप्तेः, शेषं स्पष्टमिति ॥ २ ॥ विक्षेपणाविनयश्च—मिथ्यात्वविक्षेपणान्मिथ्यादृष्टेः स्वसमयस्थापनं १. सम्यग्दृष्टेस्त्वारम्भविक्षेपेण चारित्राध्यासनं २, च्युतधर्मस्य धर्मे स्थापनं ३. प्रतिपन्नचारित्रस्य परस्यात्मनो वा अनेष-णीयादिनिवारणेन हितार्थमभ्युत्थान ४ मिति लक्षणः ॥ ३ ॥ तथा दोषनिर्घातविनयः—क्रुद्धस्य क्रोधापनयनं १; दुष्टस्य विषयादिदोषवतो दोषापनयनं २; काङ्क्षितस्य परसमयादिकाङ्क्षावत काङ्क्षाछेदः ३. स्वतश्चोक्तदोषविरहादा-त्मप्रणिधान ४ मिति स्वरुपः ॥ ४ ॥ एवं हि आत्मानं परं च विनयतीति विनय, इति दिग्मात्रमिदं, विशेषस्तु व्यव-हारभाष्यादवसेय इति । इमे मीलिताः षट्त्रिंशद्गुणास्तस्य गणिनो भवन्तीति गाथार्थः ॥ २९ ॥ तथा—

॥ मूलम् ॥—वयछक्काई अट्ठार—सेव आयारवाइ अट्ठेव ।
पायच्छित्तं दसहा सूरिगुणा हुंति छत्तीसं ॥ ३० ॥

व्याख्या—व्रतषट्कादयोऽष्टादशैव वर्णितस्वरूपा, अमीषां चाचार्यगुणत्वमेतदपराधेषु सम्यक्प्रायश्चित्तपरिज्ञानतः । भावप्रत्ययस्य लुप्तत्वादाचारवत्वादयोऽष्टावेव, ते चामी—आयारव १ मवहारव २ ववहारु ३ व्वील ४ पकुव्वीय ५ । निज्जाव ६ अवायदंसि ७ अपरिस्सावीय बोधव्वो ८ अस्याश्चार्थः—आचारवान् ज्ञानसेवाभ्यां पञ्चप्रकाराचारयुक्तः । अयं हि गुणत्वेन श्रद्धेयवाक्यो भवति १; अवधार आलोचकोक्तापराधानामवधारणं तद्वान्; स हि सर्वापराधेषु यथावच्छु-

द्धिदानसमर्थो भवति २; व्यवहारवित्ति मतुब्लोपाद्व्यवहारवानागमश्रुताज्ञाधारधारणाजीतलक्षणपञ्चप्रकारव्यवहारान्यतरयुक्तः, स हि यथावच्छुद्धिकरणसमर्थो भवति ३; लज्जादिनातिचारानानालोचयतमुपदेशविशेषैरपव्रीडयन्त विगतलज्जं करोतीत्यपव्रीडकः, स ह्यालोचकनत्रोपकरणाग्रहणं सक्रोशयोजनात्परतो गमनवर्जनमित्यादिकः। मध्यमतीर्थेषु तु नैवं, यतः—

दोसा सइ मज्झिमगा अत्थ ति उ जाव पुव्वकोडीवि। इहरा उ न मासंपिहु एवं खु विदेहजिणकप्पी ॥१॥

इह चैतेभ्य एव दशभ्यः पदेभ्यो मध्यात्सीपु षट्सु पदेषु मध्यमतीर्थिकानां सततमासेवनादस्थितकल्पो ज्ञेयस्तथाहि—आचेलेक्कुद्देसिय पडिक्कमणरायपिंडमासेसु। पज्जुसणाकप्पम्मि य अठियकप्पो मुणेयव्वो ॥ १ ॥ शेषेषु चतुर्षु तेषामपि स्थित एव, भावितं चैतदिति कृतं प्रसङ्गेन। प्रकृतं प्रस्तूयते—द्वादश तपांसि तपोभेदाः प्रागभिहितस्वरूपाः, षडावश्यकानि सामायिकादीनि प्रतीतान्युभयत्र विभक्तिलोपः प्राकृतत्वात्, सूरिगुणा मीलिताः षट्त्रिंशद्भवन्तीति गाथार्थः॥ ३० ॥ अथाचारादिसम्पदः स्वयमाह—

॥ मूलम् ॥—आयारसुयसरीरे वयणे वायणमईपओगमईए।
एएसु संपया खलु अट्ठमिया संगहपरिणाए ॥ ३१ ॥

व्याख्या—एतदर्थश्च प्राग्व्याख्यात एव ॥ ३२ ॥ तथा—

॥ मूलम् ॥ विगहा कसायसण्णा पिंडो उवसग्गज्झाणसामईयं।
भासाधम्मो एए चउगुणिया हुंति सूरिगुणा ॥ ३२॥

व्याख्या—विरूद्धा संयमबाधकत्वेन कथा वचनपद्धतिर्विकथा स्त्रीकथादिः। तत्र स्त्रीसम्बन्धिनां जातिकुलरूपनेपथ्यानां प्रशंसा निन्दा वा, तत्र जातिर्ब्राह्मणादिका, यथा—धिग्ब्राह्मणीर्धवाभावे या जीवंति मृता इव। धन्या मन्ये जने शूद्रीः पतिलक्षेऽप्यनिन्दिताः ॥ १ ॥ कुलमुग्रादि, यथा—अहो चौलुक्यपुत्रीणां साहसं जगतोऽधिकं। पत्युर्मृत्यौ विशन्त्यग्नौ याः प्रेमरहिता अपि ॥ २ ॥ रूपं शरीरसंस्थानं, यथा—चन्द्रवक्त्रा सरोजाक्षी तुङ्गपीनघनस्तनी। किं लाटी नो मता सास्य देवानामपि दुर्लभा ॥ ३ ॥ नेपथ्यं कञ्चुकपरिधानादिनिवेशविशेषरूपं, यथा—धिग्नारीरौदीच्या बहुवसनाच्छादिताङ्गलतिकत्वात्। यद्यौवनं न यूनां चक्षुर्मोदाय भवतीह ॥ ४ ॥ स्त्रीकथायां चैते दोषाः—आयपरमोहुदीरणा उड्डाहो सुत्तमाइपरिहाणी बंभवए य अगुत्ती प्रसंगदोसा य गमणाई ॥ १ ॥ उन्निक्रमणादयः, भक्तकथा—आवापनिर्वापारम्भनिष्ठानवर्णनस्वभावा, तत्र शाकघृतादीन्येतावन्ति तस्यां रसवत्यामुपयुज्यन्त इत्यावापकथा, एतावन्तस्तत्र पक्वापक्वान्नभेदा व्यञ्जनभेदा वेति निर्वापकथा, तित्तिरादीनामियतां तत्रोपयोग इत्यारम्भकथा, एतावद्द्रविणं तत्रोपयुज्यत इति निष्ठानकथेति। उक्तं च—

सागघयादावावो पक्कमपक्कं तु होइ निव्वाओ। आरंभु तित्तिराइ निट्ठाणं जा सय सहस्सं ॥ १ ॥ इह चामी दोषाः—आहारमन्तरेण वि—गेही उज्जायए स इंगालं। अजिइंदिय ओदरिआ वाउ य अणुन्न दोसा य ॥ २ ॥ देशकथा छन्दविधिविकल्पनेपथ्यविकथनस्वरूपा, तत्र छन्दो गम्यागम्यविभागो, यथा—लाटदेशे मातुलभगिनी गम्या, अन्यात्रागम्येति। विधिर्या यत्र देशे भोजनादिविरचना। विकल्पो यो यत्र नदीकूपसारण्यादिभिः शस्यनिष्पत्तिप्रकारो,

ग्रहदेवकुलनिवेशग्रामनगरादिविकल्पश्च । नेपथ्यं स्त्रीपुरुषाणां वेषः स्वाभाविको विभूषाप्रत्ययश्च, इह दोषाः—रागदो-
सुप्पत्ति सपक्खपरपक्खओ य अहिगरणं । बहुगुणइमुत्तिदोसो साउं गमणं च अणेसिति ॥ ३ ॥ राजकथा नगरादिप्रवेश-
निर्गमबलकोपप्रशंसनरूपा, यथा—सियसिंधुरखंधगओ सियचमरो सियछत्तछन्नओ । जणणयणकिरणसेओ एसो
पविसइ पुरे राया ॥ १ ॥ इत्यादि, दोषाश्चात्रचारियचारोभिमरे हिय भरिय संकक्काउकामा वा । भुत्ताभुत्तोहाणे (भुक्तभोगो
अभुक्तभोगो वा अवधान कुर्यात्) करिज्जसे आसओ गंति ॥ ४ ॥ कष्यन्ते प्राणिनोऽस्मिन्निति कषः संसारस्तमयन्ते
गच्छन्त्येभिरसुमन्त इति कषायाः । यदिवा कषाया इव कषायाः, यथाहि तुवरिकादिकषायकलुषिते वाससि मञ्जिष्ठा-
दिरागः श्लिष्यति चिरं वा अवतिष्ठते, तथैतत् कलुषितात्मनि कर्म सम्बध्यते चिरस्थितिकं च जायते तदायत्तत्वात्
तत् स्थितेः, ठिइ अणुभागं कसायओ कुणइ इति वचनात् । ते च क्रोधमानमायालोभाभिधानास्तत्र क्रोधो मोहनी-
योदयसम्पाद्यो जीवस्य परिणतिविशेषः क्रोध, एवमितरेष्वपि ४, सञ्ज्ञानं सञ्ज्ञा चैतन्यं तच्चासातवेदनीयमोहनीय-
कर्मोदयजन्यविकारयुक्तमाहारसञ्ज्ञादित्वेन व्यपदिश्यते । तत्राहारसञ्ज्ञासातवेदनीयसमुत्थआहाराभिलाषो भयसञ्ज्ञा
भयमोहनीयसम्पाद्यो जीवपरिणामः । मैथुनसञ्ज्ञा वेदोदयजनितो मैथुनाभिलाषः, परिग्रहसञ्ज्ञा चारित्रमोहोदयकृत-
परिग्रहाभिलाषः ४ पिंडः समयपरिभाषया आहारः, स चाशनपानखादिमस्वादिमरूपस्तद्विभागश्चैवं—असणं
ओयणसत्थुग मुग्गजगाराइ खज्जगविहीया । खिराइं सूरणाइं मंडगपभिइ य विन्नेयं ॥ १ ॥ पाणं सोवीरजओदगाइ
चित्तं सुगइयं चेव । आउक्क उं सव्वो कक्कडगजलाइयं च तहा ॥ २ ॥ भत्तोसं दंताई खज्जूरं नालिकेरदक्खाई । चिञ्भडि-

अंबगफणसा—इ बहुविहं खाइमं नेयं ॥ ३ ॥ दंतवणं तंबोलं चित्तं तुलसी कुहेडगाइय । महुपिंपलिसुंठाई अणेगहा साइमं होइ ॥ ४ ॥ उपसृजन्ति प्रतिपन्नार्थत्यागतोऽप्रधानोभवन्त्येभिरसुमन्त इन्युपसर्गास्ते च दैव्यमानुषतैरश्चात्मसंवेदनीयरूपास्तत्र दैव्या हास्यप्रद्वेषविमर्शपृथग्विमात्राप्रभवाः, पृथग्भिन्ना त्रिविधा मात्रा हासादिवस्तुरूपाः पृथग्विमात्राः । तथा हासेन कृत्वा प्रद्वेषेण करोतीत्येवं संयोगाः कार्याः । हासादयस्तु सुज्ञाना एव १. मानुषा अपि हासप्रद्वेषविमर्शकुशीलप्रतिषेवणासमुत्थाः, कुशीलमब्रह्म तस्य प्रतिसेवनम् २; तैरश्चा आहारहेतुभयद्वेषापत्यलयनसंरक्षणोद्भवाः ३ आत्मसंवेद्यास्तु घट्टनप्रपतनस्तम्भनश्लेषणनिमित्ताः । तत्र घट्टनेन क्वचिच्चक्षुषि रजःप्रपाते सति तन्मलनेन, प्रपतनेन गर्तकीलादौ स्खलनाद् भूमौ निपतनेन, स्तम्भनेन हस्तपादादेः स्वापात्स्तब्धत्वेन, श्लेषणेन करचरणादेराकुञ्चितस्य वातदोषात्तथैव लगनेन ४. ध्यानमन्तर्मुहूर्त्तमेकवस्तुनि चित्तावस्थानं, तदार्त्तरौद्रधर्म्यशुक्लभेदाद्भिन्नं, तत्र ऋतं दुःखं, तत्र भवमार्तमनिष्टेतरविषयवियोगशंसनादि चिन्तारूपं १, रोदयत्यपरानिति रुद्रः, प्राणिवधादिपरिणत आत्मा, तस्येदं कर्म रौद्रं, हिंसाद्यतिनिस्तृंशताध्यवसानं २; धर्मः क्षान्त्यादिलक्षणस्तस्मादनपेतं धर्म्यं सूत्रार्थाद्यनुचिन्तनं ३. शुक्लं शुचि निर्मलं सकलं मिथ्यात्वादिमलापगमाद्, यद्वा शुगिति दुःखमष्टप्रकारं वा कर्म, ततः शुच क्लमयति निरस्यतीति शुक्लमर्थाद् व्यञ्जने व्यञ्जनादर्थे योगाद्योगान्तरे च सङ्क्रामतः पूर्वगतश्रुतालम्बनमेकद्रव्यगतोत्पादादिपर्यायेषु नानानयानुचिन्तनमित्यादिकम् ४ । एतद्भेदस्वरूपं च सविस्तरं ध्यानशतकादवसेयमिह तु नोच्यते ग्रन्थविस्तरभयात् । सामायिकमिति समो रागद्वेषरहित आत्मपरिणामस्तस्यायो लाभः समायस्तत्र भवं सामा-

यिकं तच्च सम्यक्त्वश्रुतदेशविरतिसर्वविरतिभेदभिन्नम् ४. भाष्यत इति भाषा वचनं, सत्यासत्यमिश्राऽसत्यमृपास्वरूपा, तत्र सत्याऽस्त्यात्मेत्यादि १, असत्या नास्ति आत्मेत्यादि २, मिश्रा पुनरुभयरूपा, यथा विदित्वाप्यस्मिन्नगरे दश दारका जाता मृता वेत्याह ३, असत्यामृपामन्त्रणादिका, यथा हे देवदत्त इत्यादि ४। धर्मः प्राग्वर्णितशब्दार्थो दानशीलतपोभावनामयः ४। एते विकथादयो नव पदार्थाश्चतुर्गुणा भावितनीत्या चतुराहता भवन्ति सूरिगुणाः पट्त्रिंशदिति भाव, इति गाथार्थः ॥ ३२ ॥ तथा--

॥ मूलम् ॥--पंचमहव्वयजुत्तो पंचविहायारपालणुज्जुत्तो।
पंचसमिओ त्तिगुत्तो छत्तीसगुणो गुरू होइ ॥ ३३ ॥

व्याख्या--सुगमा, नवरं पञ्चमहाव्रतानि, पञ्च आचाराः पञ्च समितयस्तिस्रो गुप्तय इत्यष्टादशपदानि। अमीषां स्पर्शनपालनभेदद्वैविध्यात् पट्त्रिंशदेतावद्गुणो गुरुर्भवतीति। तत्र स्पर्शनं विधिना गुरोः पुरः प्रतिपत्तिः, पालनमुपयोगतः प्रतिजागरणमिह च स्थितकल्पादीनां यथासम्भवं सम्यगासेवनपरिज्ञानप्ररूपणपरिहारादिभिः सूरिगुणत्वमवसेयमिति गाथार्थः, ॥ ३४ ॥ सम्प्रत्यनुयोगप्रवर्तनमाश्रित्य तस्यैव गुरोर्गुणपट्त्रिंशिकां विवक्षुर्गाथाचतुष्टयमाह--

॥ मूलम् ॥--देसकुलजाइरूवी संघयणी धीइजुओ अणासंसी।
अविकत्थणो अमायी थिरपरिवाडी गहियवक्को ॥ ३४ ॥

जियपरिसो जियणिद्दो मज्झत्थो देसकालभावण्णू ।
आसन्नलद्धपइभो णाणाविहदेसभासन्नू ॥ ३५ ॥
पंचविहे आयारे जुत्तो सुत्तत्थ तदुभयविहन्नु ।
आहरणहेउकारण नयनिउणो गाहणाकुसलो ॥ ३६ ॥
ससमयपरसमयविउ गंभीरो दित्तिमं सिवो सोमो ।
गुणसयकलिओ जुत्तो पवयणसारं परिकहेउं ॥ ३७ ॥

व्याख्या--देशकुलजातिरूपाण्यतिशायीनि विद्यन्ते यस्य स तथा तत्र देशो मध्यदेशः सार्धपञ्चविंशतिजनपदरूपो वा तदुत्पन्नस्य हि वचनं शिष्याः सुखेनैवावगच्छन्ति १. कुलमीक्ष्वाकुप्रभृति २. जातिर्मातृसमुत्था, एतदुपेतो हि प्रतिपन्नार्थनिर्वाहको भवति यदुच्यते--अभिजातः प्रतिपन्नं त्यजति न कृच्छ्रेऽपि महति सम्प्राप्तः । पङ्कोपलादिविषमे--प्युज्झति पथि किं धुरं धवलः ॥ १ ॥ ३. रूपमङ्गोपाङ्गसम्पूर्णता, तद्वानादेयवाक्यो भवति, तथाहि--'धम्मोदएण रूवं' इत्यादि सर्वगुणाश्रयश्च, यत्राकृतिस्तत्र गुणा वसन्तीति कृत्वा ४. संहननी विशिष्टसंहननसंयुक्तः, स हि वाचनादिषु न श्राम्यति ५. धृतियुतः सर्वत्रानुकूलमनाः ६. आशंसत इत्येवं शील आशंसी. न तथा श्रोतृभ्योऽम्बरत्राद्याकाङ्क्षावान् ७ अविकत्थनोऽबहुभाषी, अनात्मश्लाघापरो वा ८; मायी मायावान्, न तथाऽमायी, परिवाराद्यर्थमनुयोगार्थिनः शिष्यान्न शाठ्येन वाहयति ९; [illegible] प्रमादरहितत्वेन परिपाटिः सूत्रार्थपरावर्तना यस्य वा स तथा १०. गृहीतं वाक्यं

येन यस्य वा स तथा, अवधारणावानादेयवाक्यो वेति ११. ॥ ३४ ॥

तथा जितेव जिता, निःक्षोभत्वेन परिषत्सभा येन स तथा, स हि सदसि न क्षुभ्यति १२; जितनिद्रस्तस्य हि जागरूकत्वेन सूत्रार्थौ न नश्यतो, लघु च शिष्यान् समयोदधेः पारं प्रापयति १३. मध्यस्थो रागद्वेषरहितत्वेन शिष्येषु समचित्तः १४; देशः साधुभावितादिः, कालःसुभिक्षितादिर्भावः क्षायोपशमिकादिस्तान् जानातीति तद्ज्ञः, स हि यथोचित्येन विहरति धर्मकथां च कुरुते १५; १६; १७: आसन्नाः प्रश्नानन्तरमेव लब्धा प्रतिभोत्तरदाने बुद्धिर्येन स तथा प्रत्युत्पन्नमतिरित्यर्थः, स हि क्वचिद्वादिना पृष्टस्तत्कालं निर्णयदायित्वेन प्रवचनप्रभावको भवति १८, नानाविध-देशभाषाज्ञः, अय हि नानादेशजविनेयाववोधको भवतीति १९. ॥ ३५ ॥

तथा पञ्चविधे आचारे ज्ञानादौ युक्त उद्युक्तः, स हि स्वयमुद्यतः शिष्यानुद्यमयति २४; 'सुत्तत्थतदुभयविहण्णू' सूत्रार्थतदुभयानां विविधान् भेदान् जानातीति, ततश्च सूत्रज्ञो हीनात्यक्षरादिदोषविद्, अर्थज्ञोऽविस्मृतशुद्धसम्प्रदायस्त-दुभयज्ञः सूत्रार्थकुशल इह च तदुभयपदेनैव गतार्थत्वे सूत्रार्थपदोपादानेनैव चतुर्भङ्गीं सूचयति, तदुभयपदेन च तृतीय-भङ्गस्य ग्राह्यतामाह, एवंविध एव ह्यनुयोगयोग्यो भवति २५. उदाह्रियते प्रस्तुतहेत्वाश्रयदर्शनाय प्रयुज्यत इत्युदाहरणं दृष्टान्त । हिनोति गमयति विवक्षितमर्थमिति हेतुरन्वयव्यतिरेकलक्षणः, कारणं दृष्टान्तादिरहितमुपपत्तिमात्रं, यथा निरुप-मसुखसिद्धो ज्ञानानावाधप्रकर्षाद्, अन्यत्र हि निरुपमसुखासम्भवान्नोदाहरणमस्ति, उक्तंच–

हेऊ अणुगमवइरेग--लक्खणो सज्झवत्थुपज्जाओ । आहरणं दिट्ठंतो कारणमुववत्तिमेत्तं तु ॥ १ ॥ नया नैगम १

॥१२७॥

सङ्ग्रह २ व्यवहार ३ ऋजुसूत्र ४ शब्द ५ समभिरूढैवम्भूताभिधानाः ६–७ सप्त, तेषु निपुणः कुशलोऽनीदृशो हि वचनमात्रेण न बोधयितुमलम् २९, अत एव ग्राहणाकुशलः परप्रत्यायनसहः ३० ॥ ३६ ॥ तथा स्वसमयो जैनमतं, परसमयः शाक्यादिसिद्धान्तस्तौ वेत्तीति तद्विद्, स हि परवादिभिरजय्यो भवति ३१, गम्भीरोऽतुच्छाशयः ३२, दीप्तिमान् सप्रतापस्तादृशो हि दुःप्रधृष्यः स्यात् ३३, विशिष्टतपोलब्ध्यादिभिः क्षेमकृत् ३४, सोमोऽक्रोधनः ३५, पुनः किंविशिष्टो ? गुणानां मूलगुणादीनां शतानि, बहुत्वोपलक्षणं चैतत् तैः कलित उपेतो ३६, युक्तोऽर्हः परिकथयितुं प्रवचनं द्वादशाङ्गं तस्य सारोऽर्थस्तमिति गाथाचतुष्टयार्थः ॥ ३७ ॥ अथ किमर्थमित्थ पुनः पुनर्गुरोर्गुणान्वेषणं क्रियत इत्याह --

॥ मूलम् ॥--**वूढो गणहरसद्दो गोयममाईहिं धीरपुरिसेहिं ।**
**जो तं ठवइ अपत्ते जाणंतो सो महापावो** ॥ ३८ ॥

व्याख्या--व्यूढो धृतो गणधरशब्दो गणभृद् ध्वनिः, कैर्धिया राजन्त इति धीरास्ते पुरुषाश्च तैः, किमादिभिर्गौतमादिभि र्मकारोऽलाक्षणिक इन्द्रभूतिसुधर्मप्रभृतिभि र्यश्च तं गणधरशब्दं स्वजनशिष्यादिव्यामोहात्स्थापयत्यारोपयति अपात्रेऽनर्हे पुरुषे जानन्, प्रस्तावादपात्रत्वमनेन च्छद्मस्थपरीक्षया परीक्षितस्य क्वचिदङ्गारमर्दकादाविव व्यभिचारेऽपि न दोषः, स महापापस्तत्कृततीर्थमालिन्याद्याचारस्य तन्मूलत्वाद्, इह चैतदपि ज्ञातव्यं, यथा--एस पवत्तिणिसद्दो जो वूढो अज्जचंदणाईहिं । जो तं ठवइ अपत्ते जाणंतो सो महापावो ॥ १ ॥ पात्रं पुनरियं--गीयत्था कय-

करणा कुलजा परिणामिया य गंभीरा । चिरदीक्खिया य वुड्ढा अज्जावि पवत्तिणी भणिया ॥ १ ॥ एवं च---तम्हा तित्थयराणं आराहंतो जहो इय गुणेसु । दिज्ज गणं गीयत्थो नाऊण पवत्तिणिपयं च ॥ १ ॥ इति गाथार्थः ॥ ३८ ॥ अयोग्यस्थापनामाश्रित्य दोष उक्तः, सम्प्रति कुदेशनामाश्रित्य तमाह---

॥ मूलम् ॥---तिन्निवि रयणइं देह गुरु सुपरिपक्खियइ न जस्सु ।
सीसहसीसु हरंतु जिहसो गुरु वइरि उ तस्सु ।
सो गुरु वइरि उ तस्सु इत्थु संदेसु न किज्जइ ।
सीसह सीसु हरंतु जेवं नरु नरह भणिज्जइ ॥
सुपरिपक्खयई न जस्सु सच संसउ मणिच्छिन्निवि ।
देइ सुदेव सुधम्म सुगुरुरयणइं तिन्निवि ॥ ३९ ॥

( द्विभंगिकाच्छंदः ) सुगमं, नवर, संसारचारकनिवाससन्त्रस्तप्राणित्राणमयमिति कृत्वा जन्तुर्गुरुमाश्रितः, स च तेन कुदेशनया कुदेवादिषु देवत्वादिप्रतिपत्तिमुत्पादयता सुतरां तत्र निक्षिप्त इति विश्वस्तघातित्वेन शीर्षापहारिणा तुल्य इति भावः । तथाच जहसरणमुवगयाणं इत्यादि ॥३९॥ अथ रत्नत्रयस्यैव स्वरूपमाह---

॥ मूलम् ॥---सो जि धम्मु सचराचरजोवहदयसहिओ ,
सो गुरु जो घरघरणिसुरयसंगमरहिओ ।

इंदियविसयकसाइहिं देवु जु मुक्कमलु,
एहु लेहु रयणत्तओ चिंतियदिन्नफलु ॥४०॥ (रासावलयच्छन्दः)

व्याख्या--सुगमं, नवरं. सहचरैर्वर्तन्त इति सहचरास्ते च तेऽचराश्च सचराचरा अनेन यैर्हिंसयापि धर्मोऽवहितो यथा--

यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयम्भुवा ।
यज्ञोऽस्य भूत्यै सर्वस्य तस्माद्यज्ञे वधोऽवधः ॥ १ ॥
औषध्यः पशवो वृक्षा—स्तिर्यञ्चः पक्षिणस्तथा ।
यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्यमृतं पुनः ॥ २ ॥

इत्यादि तान् प्रतिक्षिपति, यतस्तैरेवोक्तं--

सर्वे वेदा न तत्कुर्युः सर्वे यज्ञाश्च पार्वति ।
सर्वतीर्थाभिषेकश्च यत्कुर्यात् प्राणिनां दया ॥ ३ ॥

इति. तथा सुरतसङ्गमवर्जनेनैव गृहिणीवर्जने सिद्धे यत्पुनस्तद्ग्रहणं तद्धर्मपत्न्या अपि परिहारार्थं, तथा च केचिदाहुः--
क्रियाणां खलु धर्म्याणां सत्पत्न्यो मूलकारणं ॥ इति. ॥ ४० ॥ अथैतद्रत्नत्रयं कथमवबुध्यत इत्याह--

॥ मूलम् ॥—देवं गुरुं च धम्मं च भवसायरतारयं ।
गुरुणा सप्पसन्नेण जणो जाणइ णिच्छियं ॥ ४१ ॥

व्याख्या—पाठसिद्धः श्लोकः ॥ ४१ ॥ अथ प्रकारान्तरेण पुनर्गुरोरेव स्वरूपमाह—

॥ मूलम् ॥—धम्मन्नू धम्मकत्ता य सया धम्मपरायणो ।
सत्ताणं धम्मसत्थत्थ—देसओ भण्णए गुरू ॥ ४२ ॥

व्याख्या :—धर्मः श्रुतचारित्रलक्षणस्तं जानातीति धर्मज्ञो युगप्रधानागम इत्यर्थोऽनेन ज्ञानमुक्तम् धर्मः क्षान्त्यादिस्तस्य कर्त्तानुष्ठायी, अनेन क्रिया प्रतिपादिता, चकारो विशेषणसमुच्चये, तदनेन यदाहुः—किं मोक्षतरोर्बीजं ? सम्यग्ज्ञानं क्रियासहितमिति तदाविर्भावितम्, सदा सर्वकालं धर्मपरायणो, न तु द्रष्टारमपेक्ष्य कदाचिदेव, तदियता स्वार्थ उक्तः । अथ तीर्थप्रवृत्त्यङ्गभूतं देशनारूपं परार्थमाह—सत्त्वानां धर्मशास्त्रार्थदेशको भण्यते गुरुरनेन कामशब्दादिशास्त्रान्तरदेशित्वप्रतिषेधमाह, इति श्लोकार्थः ॥४२॥ तदेवं गुरुगुणग्राममुपवर्ण्य तस्यैव माहात्म्यमाह—

॥ मूलम् ॥—तं सुगुरुसुद्धदेसण—मंतक्खरकन्नजावमाहप्पं ।
जं मिच्छविसपसुत्तावि केइ पावंति सुहबोहं ॥ ४३ ॥

व्याख्या—तत् सुगुरुशुद्धदेशनैव मन्त्राक्षराणि, तेषां कर्णजापस्तस्य माहात्म्यं प्रभावो, यत्किं ? यद्भावप्रधानत्वान्निर्देशस्य, मिथ्यात्वमेव सद्बोधप्रतिवन्धसाधर्म्येण विषं तेन प्रसुप्ता इव प्रसुप्ताः प्रणष्टसंविदः । अपिः प्रकर्षद्योतने,

॥१३१॥

केचिदासन्नसिद्धिकादयः प्राप्नुवन्ति शुभबोधमिति गाथार्थः ॥ ४३ ॥ तथा—

॥ मूलम् ॥—सग्गापवग्गमग्गं मग्गंताणं अमग्गलग्गाणं ।
दुग्गे भवकंतारे नराण नित्थारया गुरुणो ॥ ४४ ॥

व्याख्या—स्वर्गापवर्गमार्गं मार्गयमाणानामथ च अमार्गलग्नानां दुर्गे भवकान्तारे नराणां निस्तारका गुरव, इति गाथार्थः ॥ ४४ ॥ अन्यच्च—

॥ मूलम् ॥—अन्नाणनिरंतरतिमिर—पूरपडिपूरियंमि भवभवणे ।
को पयडेइ पयत्थे जइ गुरु दीवा न दिप्पंति ॥ ४५ ॥

व्याख्या—निगदसिद्धा ॥ ४५ ॥ अथ मुग्धजनोचितमन्वयव्यतिरेकतो गुरोर्लक्षणमाह—

॥ मूलम् ॥—अक्खरु अक्खइ किंपि न ईहइ अन्नुवि भवसंसारह बीहइ ।
संजमनियमिहेहि खणुवि न मुचइ एह धम्मियसुहगुरु वुचइ ॥४६॥
च्छव्वोहजीवनिकाओ विराहइ पंचवि इंदिय जो नवि साहइ ।
कोहमाणमयच्छरि जुत्तओ सो गुरु नरयह नेइ निरुत्तओ ॥४७॥

व्याख्या—अक्षरं धर्मप्रतिबद्धमाख्याति, तच्च कथयन् व्यासादिवन्नकिञ्चिदीहते श्रोतृभ्यस्तस्यात्मभावक्रीतत्वेना-कल्यत्वाद् , एतेन धर्मार्थिनैव देशना विधेयेति, अन्यच्च भवे चतुर्गतिके संसारे पर्यटनं तस्माद् बिभेति, मा क्वचिदुत्सूत्रं

भविष्यतीति । समिति सम्यग् यमा अहिंसादयो मूलगुणा इत्यर्थः । नियमाः शौचादय उत्तरगुणा इत्यर्थः । यदाह—

अहिंसासुनृतास्तेय—ब्रह्माकिञ्चनता यमाः । नियमाः शौचं संतोषः स्वाध्यायतपसी अपि ॥१॥ देवताप्रणिधानं चैते तैः क्षणमपि न मुच्यते ईदृशो हि धार्मिक शुभगुरुरुच्यत इति ॥४७॥ यस्तु षड्विधजीवनिकायं विराधयति हिनस्ति, पश्चापि, आस्तामेकादिकमिन्द्रियाणि करणानि यो नैव साधयति जयति अनिरुद्धाश्रवोऽसंवरश्चेत्यर्थः । क्रोधः कोपो, मानो दुरभिनिवेशो मदो जात्याद्युत्सेको मत्सरः परगुणाद्यसहिष्णुता, तैर्युक्तो य इत्यत्रापि योगः, स गुरुरिव गुरुस्तदाभासत्वेन नरकं नयति श्रोतारमिति गम्यते, निरुत्तउत्ति लोकरूढ्या निश्चितः स्वक्रियानुरूपदेशित्वात्तस्येति वदनकद्वयार्थः ॥४८॥

अथ किमर्थममीक्ष्णमिह गुरोर्गुणोद्घोषणा ? सत्यमैहिकामुष्मिकसदनुष्ठानस्य सर्वस्यापि गुरुमूलत्वादतस्तत्परीक्षातिरेकेण प्रवर्त्तमानस्य विप्रतारकमार्गदेशकवचनप्रवृत्तस्यैव माभूद् दुरुत्तरसंसाराटवीविनिपातस्तद्गुणप्रतीतिश्च कस्यचित्कथञ्चिज्जायत इत्यनेकधा गुरुगुणव्यावर्णनमदुष्टमिति, ननु तथापि प्रथमदर्शन एव कथं तद्गुणावगम इत्याह—

॥ मूलम् ॥आलयविहारभासा चंकमणट्ठाणविणयकम्मेहिं ।
सव्वन्नूभासिएहिं जाणिज्जइ सुविहिओ साहू ॥४९॥

व्याख्या—आलयः सुप्रमार्जितादिलक्षणः, स्त्रीपशुपण्डकादिदोषरहितो वा उपाश्रयो विहारो मासकल्पादि भाषा

देशेन समुदायावगमाद् भाषासमितिः । चङ्क्रमणमीर्योपयुक्तस्य गमनक्रिया अत्र चैकग्रहणे तज्जातीयग्रहणादखिलप्रवचनमातॄणां ग्रहणं मन्तव्यम् । स्थानमूर्ध्वस्थानं निष्क्रमप्रवेशादिप्रदेशवर्जितं, विनयकर्म विनयार्हे सूचितप्रतिपत्तिरमीषां द्वन्द्वः । एतैः सर्वज्ञभाषितैस्तीर्थकृदुक्तैर्लिङ्गैरिति गम्यं, ज्ञायतेऽवगम्यते, सुष्ठु शोभनं विहितमनुष्ठानं यस्य स सुविहितः साधुर्यतिः । न चैवमप्यङ्गारमर्दकोदायिनृपमारकादिभिर्व्यभिचारः प्रायशः संवादित्वादन्यथा धूमादीनामप्यग्निज्ञानादौ सम्यग् हेतुत्वं न स्यात् । तेषामपि क्वचिद्विप्रतारकगोपालधूमभृतघटिकादौ व्यभिचारदर्शनाद्, व्यवहारनयप्राधान्येनैव च छद्मस्थानां प्रवृत्तेरेवं च यावत्तत्सद्भावो न ज्ञायते तावत्तेषामपि बाह्यलिङ्गपरीक्षया प्रतिपत्तिः कर्मक्षयायैव किं चातिशयज्ञानिनोऽपि पुरस्कुर्वन्त्येव व्यवहारनयम् यदाह— ववहारोवि हु बलवं जं छउमत्थंपि वंदइ अरिहा । जो होइ अणाभिन्नो जाणंतो धम्मयं एयं ॥१॥ इति गाथार्थः ॥४९॥ अथेत्थंभूतस्य सुविहितस्य विचित्रचारित्रमोहनीयक्षयोपशमोपशमक्षयभेदतो नामान्याह—

॥ मूलम् ॥ पुलाय णामो पढमो चरित्ती बीओ बउस्सो तइओ कुसीलो ।
चउत्थओ होइ निग्गंथनामो सव्वुत्तमो पंचमओ सिणाओ ॥५०॥

व्याख्या—तत्र पुलाको निःसारशाल्यादिकणस्ततः पुलाकवत्पुलाकः, संयमसारापेक्षया च संयमवानपि मनाक् तमसारं कुर्वन् पुलाक इत्युच्यते ततः पुलाक इति नाम यस्य स तथा प्रथम आद्यश्चारित्री साधुरयं च द्विविधो लब्धिप्रतिसेवाभेदात्, तत्र लब्धिपुलाको लब्धिविशेषवान्, संघाइयाण कज्जे भुत्तिज्जा चक्कवट्टिसेन्नंपि । ताए लद्धीएजुओ

लद्धिपुलाओ मुणेयव्वो ॥१॥

अन्ये त्वाहुरासेवनतो यो ज्ञानपुलाकस्तस्येयमीदृशी संज्ञा, स एव च लब्धिपुलाको न तद्व्यतिरिक्तः कश्चिदपर इति प्रतिषेवापुलाकश्च पञ्चधा, ज्ञानदर्शनचरणलिङ्गयथासूक्ष्मभेदात्। तत्र ज्ञानमाश्रित्य पुलाकस्तस्यासारताकारी विराधको ज्ञानपुलाक एवं दर्शनादिपुलाकोऽपि आह च—खलिआइदूसणेहिं णाणं संकाइएहिं संमत्तं। मूलोत्तरगुण-पडिसे—वणाए चरणं विराहेइ ॥१॥ लिंगपुलाओ अन्नं निक्कारणाओ करेइ जो लिंगं। मणसा अकप्पियाणं निसेव-ओहो अहासुहुमोत्ति ॥२॥ द्वितीयो नामशब्दस्यात्रापि सम्बन्धाद् बकुशनामा चारित्रीत्यत्रापि योगः। एवमुत्तरत्रापि तत्र वकुशं शबलं कर्बुरमित्यनर्थान्तरं, वकुशसंयमयोगाद् वकुश उपकरणशरीरभेदादयमपि द्विविधः। तत्र वस्त्रपात्रा-द्युपकरणविभूषानुवर्त्तनशीलः प्रथमः। नखचरणकरमुखादिदेहावयवविभूषानुवर्त्ती द्वितीयः। स चायं द्विविधोऽपि पञ्चधा, आभोगानाभोगसंवृत्तासंवृत्तयथासूक्ष्मभेदस्तत्राभोगः साधूनामकृत्यमेतत् शरीरोपकरणविभूषणमित्येवं ज्ञानं, तत्प्रधानो वकुश आभोगवकुश एवमन्येऽपि, इहाप्युक्तं—आभोगे जाणंतो करेइ दोसं अयाणमणाभोगो मूलोत्तरेहिं संवुड विवरीय असंवुडो होइ ॥१॥ अत्थिमुहमुज्जमाणो होइ अहासुहुमओ तहा वकुसो। अहवा जाणिज्जंतो असंवुडो संवुडो इयरो ॥२॥ इति। तृतीयः कुत्सितं शीलमस्येति कुशीलः, प्रतिसेवनाकषायभेदादयमपि द्वेधा, तत्र सेवना सम्यगाराधना, तत्प्रतिपक्षस्तु प्रतिसेवना तया कुशीलः प्रतिसेवनाकुशीलः। स पुनः पञ्चधा ज्ञानादिभेदात्, तत्र—इह णाणाइकुसीलो उवज्जीवं होइ णाणपभिईओ। अह सुहमो पुण तुस्सं एस तवस्सित्ति संसारे ॥१॥ कषायैः

॥१३५॥

सो णाणाइ
कुशीलः कषायकुशीलः अयमपीत्थमेव पञ्चधैव, इह गाथा--नाणे दंसणलिंगे जो जुंजइ कोहमाणमाईहिं । सो णाणाइ
कुसीलो कषायओ होइ विन्नेओ ॥१॥ चारित्तंमि कुसीलो कसायओ जो पयत्थई सावं । मणसा कोहाइए निसेवओ
होइ अहासुहुमो ॥२॥ अहवावि कसाएहिं णाणाईणि उ विराहए जो उ । सो नाणाइकुसीलो नेओ वक्खाणभेएण ॥३॥
इति । चतुर्थ एव चतुर्थको भवति, निर्गतो ग्रन्थान्मोहनीयकर्माख्यादिति निर्ग्रन्थनामा, अयं च पञ्चधा, तत्रोपशान्त-
मोहाद्धायाः क्षीणमोहच्छद्मस्थाद्धायाश्चान्तर्मुहूर्तप्रमाणायाः प्रथमसमये वर्तमानः प्रथमसमयनिर्ग्रन्थः १, शेषेषु त्वप्रथम-
समयनिर्ग्रन्थः २, एवं निर्ग्रन्थाद्धायाश्चरमसमये चरमसमयनिर्ग्रन्थः ३ शेषेषु त्वित्वरः ४, सामान्येन तु यथासूक्ष्मः ५,
इति पारिभाषिकीसंज्ञा उक्तश्चेह--

अंतमुहुत्तपमाणय-निग्गंथद्धाए पढमसमयम्मि । पढमसमयनिग्गंथो अन्नेसु अपढमसमओ सो ॥१॥ एमेव तयद्धाए
चरमे समयंमि चरमसमओ सो । सेसेसु पुण अचरमो सामन्नेणं अहसुहुमोत्ति ॥२॥ सर्वेषामुत्तमः सर्वोत्तमः पञ्चमकः
स्नात इव स्नातको घातिकर्मलक्षणमलपटलक्षालनाद् , अयमपि पञ्चधा तत्राक्षपी घातिकर्मचतुष्टयक्षपणानन्तरं तत्क्ष-
पणाभावादिति प्रथमः १ अशबल एकान्तविशुद्धचरणोऽतिचारपङ्काभावादिति द्वितीयः २ अकर्मांशो विगतघातिकर्मेति
तृतीयः ३ संशुद्धज्ञानदर्शनधरः केवलज्ञानदर्शनधारीति चतुर्थः ४ । अपरिश्रावी परिश्रवति आश्रवति कर्म बध्नातीत्येवं
शीलो न तथेति, अबन्धको निरुद्धयोग इत्यर्थ इति पञ्चमः स्नातकभेदः ५ । अमीषां च शब्दनयापेक्षया भेदः सम्भाव्यते
इह चोत्तरोत्तरेषां विशुद्धिमत्त्वादित्थं क्रमः पुलाकादीनां, अमीषां च वेदादि ३५ द्वारविचारः प्रज्ञप्तिपञ्चविंशतितमश-

तपष्ठोद्देशकादवसेय इति वृत्तार्थः ॥५०॥ अथैते सर्वेऽपि सम्प्रति प्राप्यन्ते किंवा कतिचिदेवेत्याह--

॥ मूलम् ॥--निग्गंथसिणायाणं पुलागसहियाण तिण्णवुच्छेओ ।

वकुसकुसीला दोन्निवि जा तित्थं ताव होहिंति ॥ ५१ ॥

व्याख्या--निर्ग्रन्थस्नातकयोः पुलाकसहितयोस्त्रयाणां व्यवच्छेदो निवृतिर्जन्म प्रतीत्य तेषां तृतीयचतुर्थारकयोरेव भावात् । अथ निर्ग्रन्थादिषु नामग्राहमभिहितेषु त्रयाणामिति गतार्थः, सत्यं, गतार्थानामपि दृश्यत एव लोके प्रयोगः तथा चाह जिनेन्द्रबुद्धि--यदि गतार्थानामप्रयोग एव स्यात्तदा पचति देवदत्त इत्यत्र पचतीत्येतत् तिङ्वैकत्वस्याभिहितत्वाद्देवदत्त इति सुप एकवचनं न स्यादिति । वकुशकुशीलौ द्वावपीति प्राग्वत् । यावत्तीर्थं श्रीमहावीरस्य तावद् भविष्यति, तथा च व्यवहारभाष्य--वहुसपडिसेवगा खलु इत्तिरिच्छेया य संजया दुन्नि जो तित्थणुसज्जंतित्ति गाथार्थः ॥ ५१ ॥ यतस्तौ यावत्तीर्थमनुपज्येते ततः किमित्याह--

॥ मूलम् ॥--ता तेसिं असढाणं जहसत्ति जहागमं जयंताणं ।

कालोचियजयणाए बहुमाणो होइ कायव्वो ॥ ५२ ॥

व्याख्या--तत्तस्मात्तयोर्वकुशकुशीलयोरशठयोरमायाविनोर्यथाशक्ति यथाबलं यथागममागमानतिक्रमेण यतमानयोरुद्यतयोः, कथ ? कालो दुःषमा तदुचितयतनया वह्वतिशयेन मानः पूजा भवति कर्तव्य इति गाथार्थः ॥ ५२ ॥ अथ पूजामेव व्यनक्ति--



॥१३७॥

॥ मूलम् ॥--बहुमाणं वंदणयं निवेयणा पालणा य जत्तेण ।
उवगरणदाणमेवं गुरुपूया होइ विन्नेया ॥५३॥

व्याख्या--बहुमानो मानसिकी प्रीतिर्वन्दनं द्वादशावर्तं, निवेदना द्रव्यतो भावतश्च, तत्र द्रव्यतो धनधान्यादिसर्वस्वसमर्पणम् भावतः सर्वात्मना मनः समर्पणम् पालना तदुपदेशाराधनं, चकारस्यावधारणार्थत्वाद् , यत्नेनैव परमरहस्यमिदमित्यादरेणोपकरोति संयममनुतिष्ठतः साधोरुपकारं करोतीत्युपकरणं वस्त्रपात्रादि, तस्य दानं वितरणमेवेति समुच्चये, चकारोऽभ्युत्थानागच्छदभिगमनगच्छदनुव्रजनाञ्जलिप्रग्रहादिबाह्यप्रतिपत्तिसूचकः, किं गुरुपूजा भवति विज्ञेयेति गाथार्थः ॥ ५३ ॥ अथ स्नातकाद्यपेक्षया हीनगुणानामन्येषां कथमित्थं प्रतिपत्तिरित्याह--

॥ मूलम् ॥--पलए महागुणाणं हवंति सेवारिहा लहुगुणावि ।
अत्थमिए दिणनाहे अहिलसइ जणो पईवंति ॥ ५४ ॥

व्याख्या--स्पष्टार्था, नवरं, प्रलयेऽभावे महागुणानां स्नातकादीनां लघवः शबलत्वकषायकलुषितत्वाभ्यां गुणाश्चारित्रगुणा येषां ते तथा, यतोऽस्तमिते दिननाथे सवितरि प्रदीपमप्यभिलषति जनस्तेनापि तमसि पदार्थावलोकनेन स्वार्थसिद्धेरिति ॥ ५४ ॥ यस्मादागमोऽप्येवमेव व्यवस्थितः । तथाहि--

॥ मूलम् ॥--सम्मत्तनाणचरणाणु--पाइमाणाणुगं च जं तत्थ ।
जिणपन्नत्तं भत्तीए पूयए तं तहाभावं ॥ ५५ ॥

व्याख्या--सम्यक्त्वं च ज्ञानं च चरणं च, तान्यनुपतत्यनुगच्छतीति तथा आज्ञानुगं चाप्तोपदेशानुक्तमपि यत् किंचित्सम्यक्त्वाद्यनुपाति स्यादिति तस्य पृथगुपन्यासोऽयं, यत्र पुरुषे पश्येदिति शेषः। तं भावं पर्यायविशेषं गुणाभावेऽपि जिनप्रज्ञप्तमिति कृत्वा भक्त्या बहुमानतस्तथा सम्यक्त्वाद्युचितप्रतिपत्तिप्रकारेण पूजयेत् सत्कारयेदिति गाथार्थः ॥ ५५ ॥ इह च--

॥ मूलम् ॥--केसिं चिय आएसो दंसणनाणेहिं वट्टए तित्थं।
वोच्छिन्नं च चरित्तं वयमाणे होइ पत्थित्तं ॥ ५६ ॥

व्याख्या--केषाश्चित्प्रवचनैकदेशिनामादेशो मतम्। किमित्याह--दर्शनज्ञानाभ्यां वर्तते प्रवर्तति तीर्थं चतुर्वर्णः सङ्घः, चशब्दो हेतौ, यतो व्यवच्छिन्नं निवृत्तं चारित्रं, तथा चागमः--मूलगुणउत्तरगुणा जम्हा न संति चरणसेढीओ। तम्हा जिणेहिं दोन्निवि पडिसिद्धा सव्वसाहूणं ॥ १ ॥ अग्गग्घाओ हणे मूलं मुळग्घाओ य अग्गयं। इति, अस्य व्याख्या--जह तालदुम्मस्स अग्गसूईए हयाए मूलो हओ चेव, मूलेवि हए अग्गसूई हया, एवं मूलोत्तरगुणेसुवि उवसंहारो, एवं च नत्थि कोइ सो संजओ जो मूलुत्तरगुणाणं अण्णयर न पडिसेवइ, अन्नयरगुणपडिसेवणे य दुण्हवि मूलुत्तराण अभावो, दुण्हवि अभावे सामाइयसंजमस्स अभावो। संजमस्स अभावे पंचण्हवि नियंठाणं अभावो, एवं च अचरित्तं तित्थं भवइत्ति सोपस्कारत्वादिति वदति ब्रुवाणे भवति आपद्यते प्रायश्चित्तमागमप्रतीतम्, अन्यथा प्ररूपणेन श्रुतस्याशातनासम्भवाद्, यतोऽत्रैव वक्ष्यति सिद्धान्तवचनं--'जो संजमए' इत्यादि किंच चारित्रनिषेधकैरपि दुःप्रसभान्तं

तीर्थानुवृत्तिरिष्टैव, न च ज्ञानदर्शनचारित्रव्यतिरिक्तं तीर्थमस्तीति स्ववचनव्याघातस्तथा च श्रीभद्रबाहुः--दंसणनाणं चरित्तंमि निउत्तं जिणवरेहिं सव्वेहिं एएण होइ तित्थं, इति, तस्मात्तीर्थमिच्छता चारित्रमप्यकामेनैष्टव्यम् ।

किंच यदि दर्शनज्ञानाभ्यामेव तीर्थं वर्तेत तदा श्रेणिकप्रभृतीनामपि श्रामण्यं प्रसज्येत, तेषामपि दर्शनज्ञानस्वभावाद् न च वाच्यं तेऽपि श्रमणा एव, श्रामण्यगुणयुक्तस्य नरकेष्वनुपपातात्, तेषां च नरकगमनप्रतिपादनाद् । यदप्येकविंशतिवर्षसहस्राणि तीर्थानुवृत्तिरुच्यते तदपि नोपपद्येत, दर्शनज्ञानयोः षट्स्वपि समास्ववस्थितत्वात्, तयोरेव च मोक्षमार्गत्वे सर्वगतिभ्योऽपि मुक्तिगमनप्रसङ्गाच्चेति, स्थितं साम्प्रतमपि चारित्रसहितं तीर्थमिति गाथार्थः ॥ ५६ ॥ पूर्वोक्तमेव भावयन्नाह--

**॥ मूलम् ॥--जो भणइ णत्थि धम्मो न य सामइयं न चेव य वयाइं ।**
**सो समणसंघवज्झो कायव्वो समणसंघेण ॥ ५७ ॥**

व्याख्या--यो भणति नास्ति धर्मः क्षान्त्यादिलक्षणो न च सामायिकं रागद्वेषाभावरूपं, न चैव चेति समुच्चये, व्रतानि महाव्रतानि स श्रमणसङ्घबाह्यः साधुसङ्घबहिस्ततः कर्तव्यः श्रमणसङ्घेन, द्वादशविधसम्भोगेन परिहर्तव्यः, सम्भोगश्च यथा--उवहि १ सुय २ भत्तपाणे ३ अंजलीपग्गहेइ य ४ । दायणाय ५ निकाये य ६ अब्भुठाणित्तिआवरे ७ ॥ १ ॥ किइकम्मस्सय करणे ८ वेयावच्चकरणेणि य ९ समोसरणं १० सन्निसिज्जा य ११ कहाए य पबंधणे १२ ॥ २ ॥ अस्य रूपकास्यार्थो निशीथपञ्चमोद्देशकभाष्यादवसेयः । नवरं दायणत्ति शिष्यगणार्पणं, निकायत्ति शय्योपध्या-

दिभिर्निमन्त्रणम् । यत्रानुयानादिषु बहवः साधवो मिलन्ति तत्समोसरणं, सन्निसिज्जायत्ति निषद्यागतस्य निषद्यागतेन सह श्रुतपरावर्तनं, कथाया वाग्जल्पादिरूपायाः प्रबन्धनमिति गाथार्थः ॥ ५७ ॥ किमिति—

॥ मूलम् ॥—दुप्पसहंतं चरणं जं भणियं भगवया ईहं खित्ते ।
आणाजुत्ताणमिणं न होइ अहुणत्तिया मोहो ॥ ५८ ॥

व्याख्या—दुःप्रसभो दुप्रसभनामा आचार्योऽन्ते यस्य तत्तथा, तद्गुणसंविज्ञानोऽयं बहुव्रीहिः । चरणं चारित्रं यद्यस्माद् भणितं भगवता श्रीमहावीरतीर्थंकृता इहास्मिन् भरतनाम्नि क्षेत्रे, यदवाचि—तित्थवोच्छेयकाले दुप्पसभो नाम अणगारो । तंमि कालगए चरित्तं तित्थं च वोच्छिज्जिहित्ति ॥ १ ॥ तस्मादपेगम्यमानत्वादाज्ञायुक्तानामप्यधुना दुःपमायां चरणं न भवतीत्येवंरूपा प्रतिपत्तिर्व्यामोहो मूढतेति गाथार्थः ॥५८॥ ननु तथाविधबुद्धिबलाद्यभावतः कथमिदानीं चारित्रसम्भव इत्याह—

॥ मूलम् ॥—कालोचियजयणाए मच्छररहियाणउज्जमंताणं ।
जणजत्तारहियाणं होइ जइत्तं जइणसया ॥ ५९ ॥

व्याख्या—कालोचितयतनया प्राग्वन्मत्सररहितानामुपलक्षणत्वाद्रागद्वेषवर्जितानामुद्यच्छतां प्रतिलेखनादिसामाचारीषु यतमानानां, जनयात्रारहितानां कृतप्रतिकृतिसुखदुःखचिन्तादिलोकव्यवहारमुक्तानां यतीनां यतित्वं चारित्रवत्त्वं भवति सदेति दुःपमान्तं यावदन्तररहितमित्यर्थ इति गाथार्थः ॥ ५९ ॥ एतदेव समर्थयति—



॥१४१॥

॥ मूलम् ॥— न विणा तित्थं नियं—ठेहिं नातित्था य नियंठया ।

छक्कायसंजमो जाव ताव अणुसंजणा दुण्हं ॥ ६० ॥

व्याख्या—न विना निर्ग्रन्थैश्चारित्रिभिस्तीर्थं, न चातीर्था निर्ग्रन्थास्तीर्थं विना तेऽपि न भवन्तीत्यर्थः। अनयोरन्योन्याविनाभावित्वमितिहृदयम् । इह च पुलाकबकुशप्रतिसेवणाकुशीलानामेवायं नियमः । तथाच प्रज्ञप्तिः—पुलाएणं भंते किं तित्थे हुज्जा अतित्थे हुज्जा ? गोयमा ! तित्थे होज्जा नो अतित्थे होज्जा, एवं बउसे पडिसेवणा-कुसीलेवि कसायकुसीले पुच्छा, गोयमा ! तित्थे वा होज्जा अतित्थे वा होज्जा' जइ अतित्थे हुज्जा तित्थयरे हुज्जा पत्तेयबुद्धे होज्जा ? गोयमा ! तित्थयरे वा होज्जा पत्तेयबुद्धे वा होज्जा, एवं नियंठेवि, एवं सिणायेवि तस्मात् षट्कायसंयमो यावत्तावदनुषञ्जना अनुवृत्तिर्द्वयोरिति गाथार्थः ॥ ६० ॥ उत्तरार्धमेव विवृणोति—

॥ मूलम् ॥—जा संजमया जीवेसु ताव मूला य उत्तरगुणा य ।

इत्तरिय च्छेय संजम नियंठ बउसा य पडिसेवी ॥ ६१ ॥

व्याख्या—यावत् स्वार्थिकतत्प्रत्ययान्तत्वात् संयमता रक्षणं, केषु विषये ? जीवेषु पृथिव्यादिषु, शेषगुणा-सम्भवेऽपि यावत् षड्जीवरक्षामात्रमपि लभ्यत इत्यर्थः । तावदुत्तरपदस्थगुणशब्दस्येहापि सम्बन्धान्मूलगुणा उत्तर-गुणाश्च, इत्तरं च सामायिकं सामायिकसंयमः, भीमादिन्यायेन च्छेदोपस्थापनीयसंयमश्च तौ, विभक्तिलोपश्चेह, यावच्चैतत्संयमद्वयं तावन्निर्ग्रन्थौ, चकारस्य च्छन्दोभङ्गभयान्मध्यपाताद्दीर्घत्वस्य च प्राकृतत्वाद् बकुशप्रतिसेविनौ च

बकुशप्रतिसेवनाकुशीलावित्यर्थः। अनुषज्ज्येते इति सर्वत्र योग इति गाथार्थः ॥ ६१ ॥ एतदेव समस्ततीर्थकृत्तीर्थ-व्यवस्थितत्वेन समर्थयन्नाह--

॥ मूलम् ॥ सव्वजिणाणं णिच्चं बकुसकुसीलेहिं वट्टए तित्थं ।
नवरं कसायकुसीला अपमत्तजईवि सत्तेण ॥ ६२ ॥

व्याख्या--सर्वजिनानां पुरिमान्तिममध्यमविदेहजतीर्थकृतां बकुशकुशीलाभ्यां वर्तते तीर्थं प्रवचनं नित्यमिति सततं पुलाकादीनामल्पत्वात् कादाचित्कत्वात् सतामपि च तीर्थप्रवृत्ति प्रत्यनङ्गत्वात्। नवरं केवलमयं विशेषः--कषाय-कुशीला अप्रमत्तयनयोऽपि सप्तमगुणस्थानवर्तिनोऽपि भण्यन्त इति विशेषः कथं ? सत्त्वेन कषायसत्तयेति गाथार्थः ॥६२॥ अथ सिंहावलोकनन्यायेन यदुक्तं प्राग् यस्तं स्थापयत्यपात्रे स महापाप इति तद्विशिनष्टि, यदिवा यत एव बकुशकुशी-लाभ्यां तीर्थप्रवृत्तिरत एव--

॥ मूलम् ॥--गुरुगुणरहिओ य इहं दट्ठव्वो मूलगुणविउत्तो जो ।
न उ गुणमित्तविहीणु--त्ति चंडरुद्दो उदाहरणं ॥ ६३ ॥

व्याख्या--चशब्दोऽत्र पुनःशब्दार्थः। ततो गुरुगुणरहितः पुनरिह गुरुविचारे स एव द्रष्टव्यो ज्ञातव्यः। यः किं ? यो मूलगुणवियुक्तो महाव्रतादिविरहितः सम्यग्ज्ञानक्रियारहितो वा, उपलक्षणत्वादभीक्ष्णमुत्तरगुणविराधकश्च 'जो चयइ उत्तरगुणे मूलगुणेवि अचिरेण सो चयइ।' इति वचनाद्, न तु पुनर्गुणमात्रविहीनो मधुरभाषणविशिष्टोपशमादि-

||१४३||

गुणविकल इत्यस्मिन्नर्थे चण्डरुद्रश्चण्डरुद्राचार्य उदाहरणं दृष्टान्त इह च प्रयोगः––गुणमात्रहीनोऽपि गुरुरेव मूलगुण-युक्तत्वात् चण्डरुद्राचार्यवत्, तथा ह्यसौ प्रकृतिरोषणोऽपि बहूनां संविग्नगीतार्थशिष्याणाममोचनीयो विशिष्टबहुमान-विषयश्चाभूत् । तत्कथानकं चैवं––आसीदामुक्तसुव्यक्त––ज्ञानादिगुणभूषणः । चण्डरुद्र इति श्रीमान् सूरिः प्रकृतिरोषणः ॥१॥ अनाभोगादपि कृते क्रियालोपे लघुन्यपि । आचुक्रोशाकृशक्रोधा––वेशवश्यो मुनीनसौ ॥२॥ मनागपि मुनीनां स स्खलितं क्षन्तुमक्षमः । सङ्क्लेशभीरुर्गच्छस्या––दूरदेशे स्थितिं व्यधात् ॥ ३ ॥ स तथा विहरन् ग्रामा––नुग्रामं नैष्ठिकाग्रिमः । उज्जयिन्यामथान्येद्यु––रुद्याने समवासरत् ॥ ४ ॥ कश्चिदाकारमाधुर्य––निर्जितामरदारकः । इभ्य-सूनुस्तदावन्ती––नगर्यां पर्यणीयत ॥ ५ ॥ मुनिव्रातपदाम्भोज––रजःपातपवित्रितं । तदुद्यानं समं मित्रैः क्रीडितुं स युवा ययौ ॥ ६ ॥ तत्रेभ्यसूनोः सुहृदः क्रीडन्तो ददृशुर्मुनीन् । ववन्दिरे च ते सर्वे श्रेष्ठिसुतसमन्विताः ॥ ७ ॥ ऊचुश्च पूज्याः प्रव्रज्यां दत्त नः सुहृदे स्यात् । अयं हि बाल्यात् संविग्नो गृहवासपराङ्मुखः ॥ ८ ॥ विधाय विषयानेष विभवं लोष्टुराशये । तृणाय स्त्रैणमाबाल्या––न्मेने मुनिरिवानिशं ॥ ९ ॥ शठांस्तानिङ्गितैर्ज्ञात्वा साधवः सुधियोऽभ्यधुः । अधिकारी गुरुर्दीक्षा––दानादौ न पुनर्वयं ॥ १० ॥ गुरु क्वेति तदापृष्टे––रथ सूरिरदर्श्यत । अमीषामौषधमसा––वेवेत्यालोच्य साधुभिः ॥ ११ ॥ सुधर्पणोऽयमेकाकी वर्षीयानिति दारकैः । सान्तर्हासैर्गुरुर्गत्वा नत्वा च प्राग्वदोच्यत ॥ १२ ॥ अहो मया सहामीषां मूर्खाणामेष विप्लवः । ध्यात्वेत्यमर्षणः सूरि––स्तैर्भस्मानाययद् द्रुतम् ॥१३॥ पश्यामः किं करोत्येष इति बुद्ध्या दुराशयाः । सहासाः सहसा केचि––त्तस्मै भस्मोपनिन्यिरे ॥ १४ ॥ अथ यूनः शिरः सूरि––

रुयुग्मान्तरस्थितं । क्षणाल्लुलुञ्च मित्रेषु मुञ्चमुञ्चेति वादिषु ॥ १५ ॥ नवोढश्चिन्तयामास लुञ्चितोऽस्मि यथातथा । ममेदृशस्य वै तर्हि गर्हिता गृहमेधिता ॥ १६ ॥ गृहीतं विप्लवेनापि भावतो भवतु व्रतम् । दृषदित्यादृतोऽप्यर्चां ज्ञातः सन्मणिरर्हति ॥ १७ ॥ अथ साश्रूणि मित्राणि बभाणाभिनवो मुनिः । भद्राःप्रमोदावसरे विषादः क्रियते किमु ॥ १८ ॥ अकामस्यापि मे दीक्षा जज्ञे पुण्योदयादियम् । अगादलसमभ्येन तदसौ जाह्नवी स्वयम् ॥ १९ ॥ न विप्लवममुं यूयं सौम्याश्चेदकरिष्यथ । कथं दीक्षा ममेदृक्षा-- भविष्यद् दुर्मतेस्तदा ॥२०॥ प्राणिनां स्यादुपाध्यायः को वा नाधर्मकर्मणि । निवर्तयति पापाद्य--स्तद्धि मित्रं प्रवक्ष्यते ॥ २१ ॥ दीक्षा यथातथावापि गृहीता मुच्यते कथम् । अथ मुच्येत वाच्यत्वं मज्जनं च भवार्णवे ॥ २२ ॥ तद्यात यूयं मा चैतत् कमपि ज्ञापयिष्यथ । नो चेन्मम करिष्यन्ति ज्ञातयो व्रतखण्डनम् । ॥ २३ ॥ उक्त्वेति दत्त्वालङ्कारान् विसृष्टाः सुहृदोऽमुना । अगमन् केचन क्वापि बाष्पपूरप्लुतेक्षणाः ॥ २४ ॥ अथ शैक्षोऽभ्यधाद्गीति--रत्र मे स्वजनात्प्रभो । प्रसद्य सद्यो गमन--मन्यत्र क्रियतां ततः ॥२५॥ सूरिरूचे दिवा तर्हि वर्त्मनः प्रत्युपेक्षणाम् । गत्वा त्वं कुरु येन स्या-द्विहारो निशि नौ सुखम् ॥ २६ ॥ शैक्षकेण तथा कृत्वा विज्ञप्तो रजनीमुखे । विहितावश्यकश्चण्ड--रुद्रस्तेन सहाचलत् ॥ २७ ॥ व्यक्तमग्रस्थिते मार्ग--मेकाग्रे कथयत्यपि । तस्मिन् गुरुर्जराक्लिष्टः स्खलति स्म पदे पदे ॥ २८ ॥ पन्थानं प्रत्युपेक्षिष्ठाः कीदृशं त्वं दुराशय । इति तीक्ष्णाक्षरैः क्षारै--रिवाभीक्ष्णं वपुर्दहन् ॥२९॥ दण्डेन गुरुराजघ्ने शिष्यशीर्षं मुहुर्मुहुः । नश्यद्गुणाक्रन्दरवा--कारठात्कारदारुणम् ॥३०॥ युग्मम् ॥ क्षमिणामग्रणी शैक्षः स दध्यौ शुद्धधीस्त्विदम् ॥ धिगहं गुरुसन्ताप-भागभागभवं कथम् ॥३१॥ विनीतस्येङ्गितज्ञस्य विदुषः कृतकर्मणः ।

गुरुः स्वपरिवारस्य तस्यान्तः सन् समाधिना ॥ ३२ ॥ दुरात्मना मया प्रापि पश्य क्लेशमयीं दशाम् । उपप्लवाय
तिग्मांशो--र्भवेद्राहोर्हि सङ्गमः ॥ ३३ ॥ युग्मम् ॥ गुरुणा विकटादस्मा--दाकृष्टोऽस्मि भवावटात् । दुर्गमार्गाम्बुधाव-
स्मिन् मया तु निहितो गुरुः ॥ ३४ ॥ आक्रोशतो घ्नतो वात्र दोषः कोऽप्यस्ति नो गुरोः । अपराधो ममैवाय--
मुपतापयतो गुरुम् ॥ ३५ ॥ इति भावयतस्तस्य क्षमोपचितचेतसः । घातिकर्मक्षयादिव्यं केवलज्योतिरुद्ययौ ॥ ३६ ॥
करामलकवल्लोकं तेनाकलयतोऽखिलम् । सुखं च नयतः सूरिं विभातास्य विभावरी ॥ ३७ ॥ ततो नवोदितादित्य--
किरणालिमिवारुणाम् । गुरुः क्षरन्ती मैक्षिष्ट शैक्षे रुधिरधोरणिम् ॥ ३८ ॥ ऊचे चेद्दक्षचरित--श्चिरप्रव्रजितोऽप्यहम् ।
त्वमद्यदीक्षितोऽपीह--महो नौ महदन्तरम् ॥ ३९ ॥ गुरौ मय्यसती क्षान्ति--स्त्वयि शिष्ये कथं गता ? । अविद्यमानं
कूपेष्वु प्रणाल्यां कथमागतम् ? ॥ ४० ॥ धिगधन्यं गुणैः शून्यं न्यूनं चारित्रपर्ययैः । मामाचार्यध्रुवकोटि--मारूढं
क्रोधपाप्मनः ॥ ४१ ॥ अस्य मे सुकुले जन्म प्रव्रज्या दीर्घकालिकी । चिराद्गुरुपदोपास्तिः सूत्रार्थाविगमो मनाक्
॥ ४२ ॥ आचार्यत्वं परिवार--स्तत्किं यन्न क्षमोचितम् । तथापि दुर्भगं स्त्रीव न क्षमा मां स्पृशत्यपि ॥ ४३ ॥ युग्मम् ॥
इति स्वं तीव्रसंवेग--योगान्निन्दन्नवाप सः । आचार्यश्चण्डरुद्रोऽपि शुद्धात्मा केवलश्रियम् ॥ ४४ ॥ भूयः सूरिस्तयाह्वाय
स्वपरिवारसम्पदा । दर्शान्त इव शीतांशु--र्ज्योत्स्नया समयुज्यत ॥ ४५ ॥ विहृत्य सुचिरं धात्र्या--मुध्धृत्य सुबहुं
जनम् । भवान्धकूपादाप श्री--चण्डरुद्रः शिवास्पदं ॥ ४६ ॥ इत्थं क्षान्तिगुणेन किञ्चिदमुनैवैकेन शून्योऽपि सन् पूर्णो
मूलगुणैस्तथोत्तरगुणैः श्रीचण्डरुद्रः परैः । रेखामेष युगप्रधानगणभृत्पङ्क्तौ परां प्राप्तवांस्तत्केनापि गुणेन कश्चन

गुरुर्न्यूनोऽपि पूज्यः सताम् ॥ ४७ ॥ इति गाथार्थः ॥ ६२ ॥ सम्प्रति दुःषमाद्यनुभावमाश्रित्योपदेशमाह--

॥ मूलम् ॥-कालाइदोसओ जइवि कहवि दीसंति तारिसा न जइ ।
सव्वत्थ तहवि नत्थित्ति नेव कुज्जा अणासासं ॥ ६३ ॥

व्याख्या--कालो दुःषमा आदिर्येषां चारित्रप्रतिकूलद्रव्यक्षेत्रभावानां ते तथा, तेषां दोषतो यद्यपि तादृशाः समस्तसाधुगुणकलिता यतो न दृश्यन्ते, तथापि सर्वत्र न सन्तीत्येवंरूपमनाश्वासमनास्थां न कुर्यादिति गाथार्थः ॥६३॥ यतः--

॥ मूलम् ॥-कुग्गहकलंकरहिया जहसत्ति जहागमं च जयमाणा ।
जेण विसुद्धचरित्ता कहिया अरिहंतसमयंमि ॥ ६४ ॥

व्याख्या--कुग्रहोऽसदभिनिवेशः, स एव कलङ्को दोषस्तेन रहिता यथाशक्ति यथागमं च यतमाना येन कारणेन विशुद्धचारित्रिण इति विशेषणयुक्ताः कथिता अर्हत्समये जिनमत इति गाथार्थः ॥६४॥ तादृशश्च दृश्यन्त एव, तथाहि--

॥ मूलम् ॥-अज्जवि तिन्नपइन्ना गरुयभरुव्वहणपच्चला लोए ।
दीसंति महापुरिसा अखंडियसीलपब्भारा ॥ ६५ ॥

व्याख्या--अद्यापि सम्प्रत्यपि तीर्णेव तीर्णा पर्यन्तगमनान्महानदीव प्रतिज्ञा 'करेमि भंते सामाइयं' इत्याद्यभ्युपगमो यैस्ते तथा, गुरुश्चासौ भर इव भरश्च दुर्वहत्वसाधर्म्यात्संयमस्तस्योद्वहनं निर्वहणं तत्र प्रत्यलाः समर्थाः, क्वचिद् द्रव्याद्यापद्यप्यनासेवितापवादा इति तत्त्वम्, अखण्डितशीलप्राग्भारा बलात्कारामन्त्रणोपनिपातेष्वप्यक्षुभितचेतसोऽत एव

महापुरुषा लोके दृश्यन्त इति गाथार्थः ॥ ६५ ॥ तथा--

॥ मूलम् ॥-अज्जवि तवसुसियंगा तणुयकसाया जिइंदिया धीरा ।
दीसंति जए जइणो मम्महहियय़ं वियारंत ॥ ६६ ॥

व्याख्या--स्पष्टा, नवरं धीराः क्षुदादिपरीषहसहिष्णवः, तथा मन्मथस्य वेदोदयस्य हृदयं लक्षणया रहस्यं विदारयन्त इति ॥ ६६ ॥ तथा--

॥ मूलम् ॥-अज्जवि दयसंपन्ना छज्जीवनिकायरक्खणुज्जुत्ता ।
दीसंति तवस्सिगणा विगहविरत्ता सुईजुत्ता ॥ ६७ ॥

व्याख्या--अद्यापि दयासम्पन्ना अत एव षड्जीवनिकायरक्षणोद्युक्ता दृश्यन्ते तपस्विगणा विकथाविरक्ताः, श्रुतिः स्वाध्यायस्तेन युक्ता इति गाथार्थः ॥ ६७ ॥ पूर्वोक्तमेव सङ्गृह्णन् किञ्चिद्विशेषमाह--

॥ मूलम् ॥-अज्जवि खंतिपइट्ठि--याइं तवनियमसीलकलियाइं ।
विरलाइं दूसमाए दीसंति सुसाहुरयणाइं ॥ ६८ ॥

व्याख्या--भावितार्थैयं, नवरं नियमा द्रव्याद्यभिग्रहा इति ॥ ६८ ॥ ततश्च

॥ मूलम् ॥-इइ जाणिऊण एयं मा दोसं दूसमाए दाऊण ।
धम्मुज्जमं पमुचह अज्जवि धम्मो जए जयइ ॥ ६९ ॥

व्याख्या--इति दर्शितप्रकारेण ज्ञात्वा एतद् दुष्पमायामपि चारित्रास्तित्वं मा धर्मोद्यमं प्रमुञ्चतेति योगः, किं कृत्वा? दत्त्वा दोप चारित्रप्रतिकूलतालक्षणं दुःपमाया अवसर्पिणीपञ्चमारकस्य, यतोऽद्यापि धर्मश्चारित्रलक्षणो जगति जयत्यतिशायितया वर्त्तत इति गाथार्थः ॥ ६९ ॥ एवमनेकधा दुःपमायां चारित्रास्तित्वं प्रतिष्ठाप्य निगमनमाह--

॥ मूलम् ॥-ता तुलिय नियबलाणं सत्तीए जहागमं जयंताणं ।
संपुन्नाचिय किरिया दुप्पसहंताण साहूणं ॥ ७० ॥

व्याख्या--तत्तस्मात्तुलितनिजबलानां सर्वात्मना व्यापारितस्वसामर्थ्यानां, संयमयोगेष्विति शेपः । तथा शक्त्या यथागमं यतमानानां यतनावतां क्वचिदशिवादिकारणेष्वकल्पप्रतिसेवायां प्राप्तायामिति गम्यं, सम्पूर्णैव न पुनः प्राक्तनयतिभ्यो न्यूना क्रिया संयमानुष्ठानं, स्वसामर्थ्यतुलनां प्रत्युभयेपामपि समानत्वाद्, दुःप्रसभान्तानां साधूनामिति ततश्च साम्प्रतं यतयोऽपि कतिचित् सम्पूर्णचारित्रवन्त एव, संयमयोगेपु तुलितनिजबलत्वात्प्राक्तनयतिवदिति गाथार्थः ॥७०॥ एवं चारित्रिणं व्यवस्थाप्य सामायिकोत्कर्पमाविर्भावयंस्तस्यैव चित्तं नमस्कुरुते---

॥ मूलम् ॥-लाहालाहसुहेसु जीवियमरणठिईपयाणेसु ।
हरिसविसायविमुक्कं नमामि चित्तं चरित्तीणं ॥ ७१ ॥

व्याख्या--उत्तानार्था, नवरं हर्पः प्रमोदः स च लाभादिपु विपादो दैन्यं, स चालाभादिपु, ताभ्यां विमुक्तं, तथा नमहेति विवक्षिते कवेरुक्तगुणगुरोर्भक्तिपारवश्याद् नमामीत्यायातमिति ॥ ७१ ॥ हर्पविपादविमुक्ततामेवोपदेशद्वारेण


॥१४९॥

दढयन्नाह—

॥ मूलम् ॥—वंदिज्जंतो हरिसं निंदिज्जंतो करेज्ज न विसायं ।
न हु नमिय निंदीयाणं सुगई कुगईव बेंति जिणा ॥ ७२ ॥

व्याख्या—वन्द्यमानो नमस्यमानो जनैरिति शेषः, हर्षं न कुर्यादितीहापि योगः । निन्द्यमानो हील्यमानः कुर्यान्न विषादं, यदाह—वन्दिज्जमाणा न समुच्छसंति हीलिज्जमाणा न समुज्जलंते । दंतेण चित्तेग चरंति लोए मुणी समुग्घाइयरागदोसा ॥ १ ॥ किमिति ? यतो हुरेवकारार्थो नैव नतनिन्दितानां यथासङ्ख्यं सुगतिं मोक्षादिकां, कुगतिं वा नरकादिकां ब्रुवते जिनास्तीर्थकृतस्तयोः स्वकृतसदसदनुष्ठानमूलत्वादिति गाथार्थः ॥ ७२ ॥ सर्वजनवन्द्यमानस्य गुरोर्हर्षो माभूदिति तर्जयन्निव भूयोऽप्याह—

॥ मूलम् ॥—वंदामि तवं तह संजमं च खंतीं च बंभं च ।
जीवाणं च अहिंसा जं च नियत्ता घरावासा ॥ ७३ ॥

व्याख्या—वन्दे तपस्तथा संयमं चेन्द्रियमनोनिग्रहं क्षान्तिं च ब्रह्मचर्यं च जीवानां चाहिंसां यच्च निवृत्ता विरता गृहावासात्तच्च विरतत्वं वन्दे इत्यर्थः । समदेहादित्वेन वन्द्यत्वे विशेषाभावाद् गुरुगता ज्ञानदर्शनचारित्रपर्याया एव वन्दनीया इत्यर्थः । चकाराः स्वगतानेकभेदसूचका इति गाथार्थः ॥ ७३ ॥ अथ धर्मस्य दया मूलं, न चाक्षमावान् दयां समाधत्ते तस्माद्यः क्षान्तिपरः स साधयत्युत्तमं धर्ममिति वाचकवचनमाश्रित्य त्वया क्षमैवावलम्बनीयेत्युपदिशन्नाह—

॥ मूलम् ॥—जइ खमसि तो नमिज्जसि छज्जइ नामंपि तुह खमासमणो ।
अह न खमसि नमिज्जसि नामंपि निरत्थयं वहसि ॥ ७४ ॥

व्याख्या—यदि क्षमसेऽनिमित्तं निन्द्यमानोऽपि क्रोधं न करिष्यसि, ततो नम्यसे इह लोकेऽपि जनवन्दनीयस्तदा भविष्यसीत्यर्थः । छज्जइत्ति शोभते नामापि तव तत इतीहापि योगः, किं तन्नाम ? क्षमाश्रमण इति, क्षमाप्रधानः श्रमणः क्षमाश्रमण इत्यन्वयघटनात्, व्यतिरेकमाह—अथ न क्षमसे तदा न नम्यसे, नामापि क्षमाश्रमण इति निरर्थकं वहसि, अन्वयाघटनाद् वृद्धपुरुषेऽजरामरादिव्यपदेशवदिति गाथार्थः ॥ ७४ ॥ अथ निरर्थकनामवाहिन एव भेदेनाख्याय तेषु कृत्यमाह—

॥ मूलम् ॥—पासत्थओसन्नकुसीलरूवा संसत्तहाछंदसरूवधारी ।
आलावमाईहि विवज्जणिज्जा अवंदणिज्जा य जिणागमंमि ॥ ७५ ॥

व्याख्या—पार्श्वे ज्ञानादीनां तिष्ठतीति पार्श्वस्थः । अथवा मिथ्यात्वादयो बन्धहेतवः पाशास्तेषु तिष्ठतीति पाशस्थः । अवसन्न इवावसन्नः सामाचार्याः सेवने शिथिलीभूतः पराभग्न इत्यर्थः, कुत्सितं शीलमस्येति कुशीलस्तत एतेषां स्वरूपं स्वभावो येषां ते तथा, संसक्तः सदसदाचारयोः सम्पृक्तः, यथाछन्दः स्वरुचिप्रधान उत्सूत्रप्ररूपक इत्यर्थः, तयोः स्वरूपं धारयन्ति ये ते तथा, वचनव्यत्ययः प्राकृतत्वाद्, आलापादिभिरादिशब्दात्संवासादिभिर्विवर्जनीयास्तथा च—आलावो संवासो विस्संभो संथवो पसंगो य । हीणायारेहिं समं सव्वजिणिदेहिं पडिकुट्ठो ॥ १ ॥

अवन्दनीयाश्च जिनागमेऽर्हत्प्रवचन इति। पार्श्वस्थादिस्वरूपं च सूत्रगाथाभिरुच्यते--सो पासत्थो दुविहो सव्वे देसे य होइ नायव्वो। सव्वंमि नाणदंसण--चरणाणं जो उ पासंमि ॥ १ ॥ देसंमि उ पासत्थो सेज्जायरभिहडनीयपिंडं च। नीयं च अग्गपिण्डं भुंजइ निक्कारणे चेव ॥ २ ॥ पिण्डशब्दो नित्यशब्दश्च सर्वपदेषु सम्बध्यत इति। तथा--कुलनिस्साए विहरइ ठवणाकुलाणि य अकारणे विसइ। संखडिपलोयणाए (विवाहाद्यवलोकनाय) गच्छइ कह संथवं कुणइ ॥१॥ मात्रादिसम्बन्धघटनसम्बन्धलक्षणम्। ओसन्नोवि य दुविहो सव्वे देसे य तत्थ सव्वंमि। उउबद्धपीढफलगो ठवियगभोइ य नायव्वो ॥ २ ॥ ऋतुबद्धे पीठफलकासेवक एकान्तेनास्तीर्णसंस्तारक एव वा, शेषं सुगमम्। देशावसन्नस्तु--आवस्सगसज्झाए पडिलेहणज्झाणभिक्खं भत्तठे। अइगमणे निग्गमणे ठाणे य निसीयणतुयट्टे ॥ १ ॥ एतेषु विषये देशावसन्नो भवतीत्यर्थः, कदा इत्याह--

आवस्सगाइयाइ न करे अहवा वीहीणमहीयाइं। (यदैतानि सर्वथा न करोतीत्यर्थः) अन्यथा--गुरुवयणबला य तहा। (क्वचिद्वितथाचरणे गुरूणा प्रेरितः सन् संमुखीभूयालजालानि वक्ति, न पुनः सम्यक् प्रतिपद्यते) भणिओ एसो उ ओसन्नो ॥ १ ॥ तिविहो होइ कुसीलो णाणे तहा दंसणे चरित्ते य। तत्थ य णाणकुसीलो अकालसज्झायमाईहिं ॥ २ ॥ सम्मत्तकुसीलो पुण संकाइसेवगो मुणेयव्वो। कोउगभूइकम्माइ सेवगो होइ चरणंमि ॥ ३ ॥ सौभाग्यादिकृते योषिदादीनां त्रिकचतुष्कादिषु स्नानादिकरणं कौतुकं, ज्वराद्यपगमार्थमभिमन्त्रितभस्मनो दानं भूतिकर्म, आदिशब्दान्निमित्तादिकमवसेयमिति। सङ्क्लिष्टाक्लिष्टभेदात् संसक्तोऽपि द्वेधा, तत्र--पंचासवप्पवत्तो जो खलु तीहिं गारवेहिं

पडिवद्धो । इत्थीगिहिसंकिलिठो संसत्तो संकिलिट्ठो उ ॥ १ ॥

स्त्रीसङ्क्लिष्टः स्त्रीप्रतिसेवी, गृहिसङ्क्लिष्टस्तद्वद्धान्यादितप्तिकारी । असङ्क्लिष्टस्तु--पासत्थाइएसु संविग्गेसु च जत्थ संमिलइ । तह तारिसओ होइ पियधम्मो अहव इयरो उ ॥ १ ॥ धार्मिकमध्ये धार्मिकमिवात्मानं दर्शयति, इतरेषु त्वितरमिति । उस्सुत्तमायरंतो उस्सुत्तं चेव पन्नवेमाणो । एसो उ अहाछंदो इच्छाछंदोत्ति एगट्ठा ॥ १ ॥ इह चोपलक्षणमिदम्, अन्येऽपिनित्यवासिकथिकप्राश्निकमामकसम्प्रसारिणः सूत्रेऽवन्द्यत्वेनाभिहिताः । तल्लक्षणमिदं--एगखेत्तंमि सया तहाविहालंवणं विणा जे उ । विहरइ सायागरुओ नियावासंतिगं वेंति ॥१॥ आहाराईणट्ठा जसहेउं अहव पूयणनिमित्तं । तक्कामो जो धम्मं कहेह सो काहिओ होइ ॥ २ ॥ लोइयववहारेसु लोइयसत्थाइएसु कज्जेसु । पासणियत्तं (विचारणं) कुणइ पासणिओ सो उ नायव्वो ॥ ३ ॥ खेत्ताइसु ममत्तं कुणमाणो मामगो मुणेयव्वो । कयविक्कयाय गिहिणा--मंतंतो संपसारीओ । ॥ ४ ॥ इति गाथार्थः ॥ ७५ ॥ अथैतद्वन्दने को दोष इत्याह--

॥ मूलम् ॥—**वंदंतस्स उ पासत्थ—माईणो नेय निज्जर न कित्ती ।**
**जायइ कायकिलेसो बंधो कम्मस्स आणाई ॥ ७३ ॥**

व्याख्या--वन्दमानस्य पार्श्वस्थादीनैव निर्जरा कर्मक्षयलक्षणा, तीर्थकराज्ञाविराधनद्वारेण निर्गुणत्वाच्च कीर्तिरहो पुण्यभागयमित्येवंलक्षणा, अपित्वकीर्तिरेव, यदयमेवंस्वरूपोऽप्येतान् वन्दत इति । तथा जायते कायक्लेशोऽवनामादिलक्षणः शरीरखेदः, तथा बन्धो विशिष्टरचनया आत्मनि स्थापनं, क्रियत इति कर्म ज्ञानावरणीयादि तस्य तदा चाज्ञु-

मोदनात् । तथा चाभिहितं—किइकम्मं च पसंसा सुहसीलजणम्मि कम्मबंधा य । जे जे पमायठाणा ते ते उववूहिया हुंति ॥ १ ॥ पदैकदेशेऽपि पदावगमादाज्ञाभङ्गादयश्च जायन्त इतीहापि योगः । तत्र भगवत्प्रतिकुष्टवन्दनेनाज्ञाभङ्गस्तं दृष्ट्वान्येऽपि वन्दन्त इत्यनवस्था, तान् वन्दमानान् दृष्ट्वान्येषां मिथ्यात्वं, कायक्लेशतो देवताभ्यो वात्मविराधना, तद्वन्दनेन तत्कृतासंयमानुमोदनात्संयमविराधनेति गाथार्थः ॥ ७६ ॥ एवं तावत्पार्श्वस्थादीन् वन्दमानस्य दोषा उक्ताः, साम्प्रतं तेषामेव गुणाधिकवन्दनप्रतिषेधमकुर्वतामपायान् दर्शयति—

॥ मूलम् ॥—जे बंभचेरस्स वयस्स भट्ठा उड्डुंति पाए गुणसुट्ठियाणं ।
जम्मंतरे दुल्लहबोहिया ते लाहेवि कुंटत्तणयं लहंति ॥ ७७ ॥

व्याख्या—पष्ठ्याः पञ्चम्यर्थत्वाद् ये ब्रह्मचर्याद् व्रताद् भ्रष्टाः, शेषव्रतोपलक्षणमिदमस्यैव च भणनमेतद्भ्रंशस्याति-दौष्ट्यख्यापनार्थमत एवात्रापवादोऽपि नास्ति, तथा चात्र कल्पभाष्यं—कामं सव्वपएसु वि ओसग्गववायधम्मया जुत्ता । मुत्तुं मेहुणभावं न विणा तं रागदोसेण ॥ १ ॥ उड्डुंतित्ति उपनयंति पादौ चरणौ गुणसुस्थितानां मूलोत्तरगुणधारिणां, वन्दनमानानामिति शेषः । ते एवमुपचितपापभरा जन्मान्तरे दुर्लभबोधिका नरकतिर्यक्षु भूयोभूयः परिभ्रम्य कदाचित्पु-नरनन्तकालात्तदवाप्तेः ।

किञ्च लब्धायामपि बोधौ कुण्टत्वमकुण्टत्वमुपलक्षणत्वादान्ध्यबाधिर्यमौक्यरोगित्वादि च लभन्ते, यथा न शक्नुवन्ति धर्ममनुष्ठातुं, कुण्टः पाणिविकलो मण्टस्तु विसंस्थुलोरुजङ्घ इति. तस्मादवन्दनीया एते पार्श्वस्थादय इति स्थितमिति

गाथार्थः ॥ ७७ ॥ अत एव च—

॥ मूलम् ॥—पासत्थो ओसन्नो कुसीलसंसत्तनीय अहछंदो ।
एएहिं आयरियं न आयरिज्ज न यासंसे ॥ ७८ ॥

व्याख्या—पार्श्वस्थादयो वर्णितस्वरूपास्तत्र एतैराचीर्णमाचरितं नाचरेन्नाशंसेच्चेति गाथार्थः ॥ ७८ ॥ यतः—

॥ मूलम् ॥—जं जीयमसोहिकरं पासत्थपमत्तसंजयाईहिं ।
बहुएहिं वि आइन्नं न तेण जीएण ववहारो ॥ ७९ ॥

व्याख्या—यज्जीतं सामाचारीविशेषोऽशोधिकरं न कर्ममलापनयनसहं पार्श्वस्थप्रमत्तसंयतादिभिः, पार्श्वस्थाः पूर्वोक्ताः प्रमादिनस्तत्प्रकारैर्बहुभिरप्यास्तामेकेन केनचिदाचीर्णं प्रवर्तितं, न तेन जीतेन व्यवहारस्तीर्थप्रवृत्तिः, शतमप्यन्धानां न पश्यतीति न्यायाज्जीतलक्षणस्यैव वायोगाच्छब्दप्रवृत्तिस्तु गौणवृत्यापि भवतीति गाथार्थः ॥७९॥ किन्तु—

॥ मूलम् ॥—जं जीयं सोहिकरं संवेगपरायणेण दंतेण ।
एकेण वि आइन्नं तेण उ जीएण ववहारो ॥ ८० ॥

व्याख्या—यज्जीतं शोधिकरं संवेगपरायणेनोपलक्षणत्वाद् गीतार्थेन च दान्तेन्द्रियदमादेकेनाप्यास्तां बहुभिराचीर्णं, तेन, तुरेवकारार्थः पुनः सम्भाव्यते, जीतेन व्यवहार एव प्रदीपकल्पत्वात्, उक्तं च—एकोवि नायवाई अवलंबंतो विसुद्धववहारं । सो होइ भावसङ्घो जिणाण आणं अलंघंतो ॥ १ ॥ आचीर्णलक्षणं चेति–धिइसंघयणाईणं मेराहाणिं च

जाणिउं थेरा । सेह अगीयत्थाणं ठवणा अइणकप्पस्स ॥१॥ अवलंबिऊण कज्जं जं किंचि आयरंति गीयत्था । थोवावराहबहुगुण सव्वेसिं तं पमाणंतु ॥२॥ तस्मात्पार्श्वस्थाद्याचीर्णं नाचरेन्न शंसेदिति गाथार्थः ॥८०॥ अत्रैवाभ्युच्चयमाह—

॥ मूलम् ॥—आणाए अवट्टंतं जो उववूहिज्ज जिणवरिंदाणं ।
तित्थयरस्स सुयस्स य संघस्स य पच्चणीओ सो ॥ ८१ ॥

व्याख्या—जिनवरेन्द्राणामाज्ञायामवर्तमानं य उपबृंहयेद् द्वादशावर्तवन्दनादिना स्तूयाद्वस्त्रपात्रादिना च सन्मानयेत् स तीर्थंकरस्य श्रुतस्य सङ्घस्य च प्रत्यनीकस्तत्प्रतिकूलवर्त्यनुमोदनादिति गाथार्थः ॥ ८१ ॥ अथ वस्त्रपात्राद्याशंसया मार्गगामिनं महर्द्धिकगृहस्थादिकमनुवर्तयन्ति ये तान् प्रत्याह—

॥ मूलम् ॥—किंवा देइ वराओ मणुओ सुट्ठुवि धणीवि भत्तोवि ।
आणाइक्कमणं पुण तणुयंपि अणंतदुहहेउ ॥ ८२ ॥

व्याख्या—किं वा किमिव ददाति वराको मनुजः सुष्ठ्वप्यतिशयेन धन्यपि भक्तोऽपि किंचिद्वस्त्रपात्रादि, ददद्प्याज्ञातिक्रमणजनितापायापेक्षया न किञ्चिदित्यर्थः। आज्ञातिक्रमणं पुनस्तन्वपि स्वल्पमप्यक्षरपदाद्यरोचनमप्यनन्तदुःखहेतुरनन्तभवभ्रमणत्वादिति गाथार्थः ॥ ८२ ॥

॥ मूलम् ॥—तम्हा सइ सामत्थे आणाभट्ठंमि नो खलु उवेहा ।
अणुकूलगेयरेहिं अणुसट्ठी होइ दायव्वा ॥ ८३ ॥

व्याख्या—यस्मादाज्ञातिक्रमणमनन्तदुःखहेतुस्तस्मात् सति सामर्थ्ये तद्व्यावर्तनं प्रति विद्यमानायां शक्तावाज्ञाभ्रष्टे आज्ञातिक्रमकारिणि नो खलुरप्यर्थे, नोपेक्षाप्यौदासीन्यमपि, आस्तां तदनुवर्तनम्, कार्येति शेषः। अयमभिप्रायः—य एवाज्ञाभङ्गं विधास्यति स एवानन्तदुःखभाग्भविष्यति, किमस्माकमिति बुद्ध्या नोदासितव्यम् यतः—आणाभंगं दट्ठुं मज्झत्था मुत्तिठंति जे तुसिणी। अविहिअणुमोयणाए तेसिंपि य होइ वयलोवो ॥ १ ॥ तेसिंपि य सामन्नं भट्ठं भट्ठवया य ते होंति। जे समणा कज्जाइं विचारक्खाए कुव्वंति ॥ २ ॥ इति तर्हि किं कर्तव्यमित्याह—अनुकूलैः प्रियैरितरैश्च निष्ठुरैर्वचोभिरिति गम्यम्, अनुशिष्टिः शिक्षा भवति दातव्येति गाथार्थः ॥ ८३ ॥ ननु सम्प्रत्याज्ञातिक्रमकारिण एव महाजनपरिगृहीताश्च बहवस्तावदुपलभ्यन्ते, ततः कथमिदं कर्तुं शक्यमित्याशयवतामुपदिशति—

॥ मूलम् ॥—एवं पाएण जणा कालाणुभावा इहं तु सव्वेवि ।
णो सुंदरा जम्हा आणा जुत्तेसु पडिबंधो ॥ ८४ ॥

व्याख्या—एवमिति परिदृश्यमानप्रकारेण प्रायेण बाहुल्येन जनाः साधुश्रावकादय सर्वेऽपि कालानुभावाद् दुःषमाप्रभावादिह भरतक्षेत्रे, तुः पादपूरणे, नो सुन्दरा भव्याः सम्भवन्तीति योगः। यतः सम्प्रति द्रव्यतः प्रतिपन्नजिनशासना अपि बाहुल्येनाभव्या दूरभव्याश्चोक्ता इतिशब्दो वाक्यपरिसमाप्तौ, तस्मादाज्ञायुक्तेषु प्रतिबन्धः, स्वल्पा अपि ये केचनाज्ञायां वर्तन्ते, तेष्वेव गुरुबुद्ध्या बहुमानो विधेय इति भाव इति गाथार्थः ॥ ८४ ॥ आज्ञाविरहितेषु तर्हि का वार्तेत्याह—



||१५७||

॥ मूलम् ॥—इयरेसुवि य पओसो नो कायव्वो भवट्ठिई एसा ।
नवरं विवज्जणिज्जा विहिणा सयमग्गनिरएणं ॥ ८५ ॥

व्याख्या—इतरेष्वप्याज्ञाविकलेषु प्रद्वेषो मत्सरो न कर्तव्यो, यतो भवस्थितिरेषा, यद्विचित्रकर्मपरिणतेरेव जघन्यमध्यमोत्तमैर्जन्तुभिर्भाव्यमिति । नवरं केवलं विवर्जनीया आलापादिभिर्विधिना सूत्रनीत्या सदा मार्गनिरतेन समयोक्तनीतिवर्तिनेति गाथार्थः ॥ ८५ ॥ अत्रैव विशेषमाह—

॥ मूलम् ॥—अगीयादाइन्ने खित्तेऽणठिइ अभावंमि ।
भावाणुवघायत्तणु—वत्तणाए तेसिं तु वसियव्वं ॥ ८६ ॥

व्याख्या—अगीत इत्येकदेशेऽपि समुदायागमादगीतार्थस्ततश्च—गीयं मुणी एगट्ठं ठिइत्थं खलु वयंति गीयत्थं । इतिवचनाद् गीतो ज्ञपरिज्ञया प्रत्याख्यानपरिज्ञया च विदितोऽर्थो येन स गीतार्थो, न तथा पार्श्वस्थ इत्यर्थः स आदिर्येषामवसन्नादीनां, तैराकीर्णे व्याप्ते भावित इति यावत्, क्षेत्रे नगरादावन्यत्र क्षेत्रान्तरे, स्थीयते आभिरिति स्थितयोऽवस्थानकारणादि, तासामभावेऽस्थानयोग्यक्षेत्रान्तरे सति पार्श्वस्थादिभाविते वस्तव्यमेवेति भावः । तेषां पार्श्वस्थादीनां तुर्विशेषेण दर्शयिष्यते च भास्य चारित्रपरिणामस्यानुपघातेन मनःकालुष्यहेतुतत्कलहत्यागेनेति हृदयम् अनुवर्तनया चानुकूल्येन वाङ्नमस्कारादिलक्षणेन पुनर्वस्तव्यमिति गाथार्थः ॥ ८६ ॥ अन्यथा दोषमाह—

॥ मूलम् ॥—इहरा सपरूवघाओ उच्छोभाईहिं अत्तणो लहुया ।
तेसिंपि पावबंधो दुगंपि एयं अणिट्ठंति ॥ ८७ ॥

व्याख्या—इतरथा तदकरणे स्वपरोपघातस्तथा च उत्प्राबल्येन गता शोभा यस्मात्तदुच्छोभमालप्रदानं, तदादिभिरादिशब्दात्कलहादिभिरात्मनो लघुता लाघवं, तेषामपि पापबन्धो गुणिजनप्रद्वेषाद्, द्वयमपि चैतदनिष्टमिति प्रक्रमसमाप्ताविति गाथार्थः ॥ ८७ ॥ निगमनमाह—

॥ मूलम् ॥—ता दव्वओ य तेसिं अरत्तदुट्ठेण कज्जमासज्ज ।
अणुयत्तणत्थमीसं कायव्वं किंपि नो भावा ॥ ८८ ॥

व्याख्या—तत्तस्माद् द्रव्यतस्तुरेवकारार्थे, तेषामरक्तदुष्टेन साधुनेति गम्यं, कार्यं ज्ञानचरणादिकमासाद्य अनुवर्तनार्थमीषन्नमस्कारमात्रादिकं कर्तव्यं, न पुनः किंचिदपि भावतः । तथा चात्रागमः—वायाए १ आलवत्ते २ नमुक्कारो हत्थुस्सेहो य ३ सीसनमणं ४ च । संपुच्छण ५ छणं ६ थोभ—वंदणं ७ वंदणं वावि ८ ॥ १ ॥ परियायपरिसपुरिसं खेत्तं कालं च आगमं नाउं । कारणजाए जाए जहारिहं जस्स जं जोग्गं ॥ २ ॥ एयाइं अकुव्वंतो जहारिहं अरिहदेसिए मग्गे । न भवइ पवयणभत्ती अभत्तिमंताइया दोसा ॥ ३ ॥ अभक्त्यादयोऽभक्तिप्रद्वेषस्वार्थभ्रंशबन्धनादयो दोषा इति गाथार्थः ॥ ८८ ॥ ननु पूर्वमालापाद्यप्यमीभिः सार्धं न तत्कथमिदमुच्यते ? सत्यमपवादमाश्रित्य, अथोत्सर्गापवादयोः कः कस्मात्सिद्ध्यतीत्याह—

॥ मूलम् ॥—उन्नयमविक्ख निन्नस्स पसिद्धी उन्नयस्स निन्नाओ ।

इय अन्नोन्नावेक्खा उस्सग्गववाय दो तुल्ला ॥ ८९ ॥

व्याख्या—उन्नतमपेक्ष्य निम्नस्य प्रसिद्धिः, सद्भाव उन्नतस्य निम्नात्, ल्यब्लोपे पञ्चमी, निम्नमपेक्ष्येत्यर्थः, इत्येवमन्योन्यापेक्षावुत्सर्गापवादौ द्वावपि तुल्यौ, निम्नत्वोन्नतत्वपरत्वापरत्ववत्परस्परसव्यपेक्षितावनयो र्न पुनः कश्चित्कुतोऽपि सिद्ध्यतीति भावः । अत एव निशीथादिसूत्राणि सर्वाणि सापवादानि पठ्यन्ते तथा च तत्रैवोक्तं—जावइया उस्सग्गा तावइया चेव हुंति अववाया । जावइया अववाया तावइया चेव उस्सग्गा ॥ १ ॥ अतो द्वयोरपि भगवदुक्तत्वेन निर्जराहेतुत्वं, केवलमनयोर्विषयः सम्यग्विवेचनीय इति गाथार्थः ॥ ८९ ॥ अथ विस्तरप्रसङ्गं वाक्यखण्डेन निरुन्धन्नुक्तानुक्तार्थसङ्ग्रहं सङ्क्षिप्य शार्दूलेनाह—

॥ मूलम् ॥—किं बहुणा ?—मा आयण्णह मा य मन्नह गिरं कुतित्थियाणं तहा,

सुत्तुत्तिन्नकुबोहकुग्गहगहग्घत्थाणमन्नाणवि ।

णाणोणं चरणज्जुयाण य तहा किच्चं करेहायरा

निस्सेसं जणरंजणत्थमुचियं लिंगाविसेसाणवि ॥ ९० ॥

व्याख्या—किं ? न किञ्चिदित्यर्थो, बहुनोक्तेनेति शेषः, सङ्क्षेपस्यैव प्रकान्तत्वात् मा आकर्णयत ? कदाचिदाकर्णनेऽपि मा च मन्यन्तामभ्युपगच्छत गिरं वाचं कुतीर्थिकानां शाक्यादीनां, तथा तेनैव प्रकारेण सूत्रोत्तीर्णोऽत एव

कुत्सितो बोधस्तेन कुग्रहः कदभिनिवेशः स एव ग्रहस्तेन ग्रस्तानां स्वीकृतानामपि स्वयूथ्यानां गिरमिति सक्रियमिहापि सम्बध्यते । तथा च कल्पभाष्यं--

जो तं जगप्पईवेहिं पणीयं सव्वभावपण्णवणं । ण कुणइ सूयं पमाणं न सो पमाणं पवयणम्मि ॥ १ ॥ ज्ञानिनां चरणोद्यतानां च, चकारो ज्ञानचरणयोः समुदितयोरेव प्रामाण्यमावेदयति । यदाह--नाणाहीणं सव्व णाणनओ भणइ किंच किरियाए । चरणनओ किरियाए तदुभयगा होइ समत्तं । इति तथा सूत्रभणितप्रकारेण निःशेषं कृत्यं कृतिकर्मादि कुरुत ? आदरात् सर्वप्रयत्नेन, लिङ्गमेवाविशेष उद्धरितं येषां, न पुनर्ज्ञानादि, तेषामपि जनरञ्जनार्थमुचितमालापनमस्कारादि कुरुतेति वृत्तार्थः ॥ ९० ॥ तथा--

॥ मूलम् ॥--गुरुकम्माण जियाणं असमंजसचेट्ठियाणि दट्ठूण ।
णिंदपओसं मणयंपि सव्वहा संविवज्जेज्जा ॥ ९१ ॥

व्याख्या--गुरुकर्मणां जीवानामसमञ्जसचेष्टितानि, तथा प्रवचनप्रतिषिद्धाचरणानि दृष्ट्वा निन्दां दोषभाषणं प्रद्वेषं मात्सर्यं मनागपीषदपि सर्वथात्मपरोभयौ सम्यगन्तः करणशुद्ध्या विवर्जयतेति गाथार्थः ॥ ९१ ॥ अन्यच्च--

॥ मूलम् ॥--दुस्समकालसरूवं कम्मवसित्तं च तेसि जीवाणं ।
भावेह कुणह गुरु--आयरं च गुणवंतपत्तेसु ॥ ९२ ॥

व्याख्या--दुःषमकालस्वरूपं कर्मवशित्वं च तेषां दुःषमासमयोद्भवानां जीवानां भावयत चिन्तयत, अत एव

दुर्लभत्वाद् गुणवतां कुरुत गुर्वादरं च, गुणवत्पात्रेषु गुणवत्प्रतिपत्तिमितरवर्जनं च, पुनःपुनरुपदिशन्निदमेवैहिकामुष्मिकार्थ-साधकमित्यावेदयतीति गाथार्थः ॥९२॥ इति श्रीदेवभद्रसूरिविरचिते दर्शनशुद्धिविवरणे साधुतत्त्वं समाप्तम् ॥ श्रीरस्तु ॥

---

नमो नवतत्त्वविदे

अथ मूलद्वारगाथाक्रमप्राप्तस्य पञ्चमतत्त्वस्य व्याख्या प्रतन्यते,

**॥ मूलम् ॥—जीवाजीवा पुन्नं पावासव संवरो य निज्जरणा ।**
**बंधो मुक्खो य तहा नवतत्ता हुंति नायव्वा ॥ १ ॥**

व्याख्या—तत्र जीवितवन्तो जीवन्ति जीविष्यन्ति चेति जीवाः, व्युत्पत्तिनिमित्तं चेदं, प्रवृत्तिनिमित्तं तु संविल्लक्षणत्वमेव, तेन सिद्धैर्न व्यभिचारस्ततो जीवाश्च तद्विपरीता अजीवाश्चेति द्वन्द्वः, पुण्यं शुभप्रकृतिरूपं तीर्थकरना-मादि, पापमशुभं मिथ्यात्वादि विभक्तिलोपश्च प्राकृतत्वाद्, एवमुत्तरत्रापि, आश्रवत्यागच्छत्यनेन कर्मेत्याश्रवः कर्मोपा-दानहेतुर्हिंसादिः, संवरणं संवरो गुप्त्यादिभिराश्रवनिरोधश्च, चः समुच्चये, निर्जरा विपाकात्तपसो वा कर्मपरिशाटो बन्धो जीवकर्मणोरत्यन्तसंश्लेषो मोक्षः कृत्स्नकर्मक्षयात् स्वात्मन्यवस्थानं, चकारोऽवधारणे, एतान्येव तत्त्वानि, न पुनः सुगतसाङ्ख्योलूकादिपरिकल्पितानि, तेषां विचाराक्षमत्वात् । तथा तेनागमोक्तप्रकारेण नवतत्त्वानि, प्राकृतत्वात् पुंसो निर्देशो भवन्ति ज्ञातव्यानि । इह च तत्त्वानां नवसङ्ख्यत्वं मध्यमप्रस्थानापेक्षया, अन्यथा सङ्क्षेपापेक्षया जीवाजीवयो,

रेव बन्धादीनामन्तर्भावसम्भवाद् द्वित्वमेव। विस्तरतस्तु तदुत्तरोत्तरभेदविवक्षयानन्त्यमेव स्यादिति गाथासङ्क्षेपार्थः ॥१॥
अथ प्रत्येकमेतान् विवरितुकामो यथोद्देशं निर्देश इति न्यायादादौ जीवतत्त्वं विवृणोति--

॥ मूलम् ॥—एगविहदुविहतिविहा चउहा पंचविहछव्विहा जीवा ।
चेयण तस इयरेहिं वेयगइकरणकाएहिं ॥ २ ॥

व्याख्या—एकविधद्विविधत्रिविधाश्चतुर्विधाः पञ्चविधषड्विधा जीवा भवन्तीति शेषः । कथमिति क्रमेणाह--चेयणेत्यादि, चेतनया एकविधाः, सर्वसत्त्वानां तदव्यभिचारात् । त्रसाश्च चरन्त इतरे च स्थावरास्तेषां भावस्तत्त्वं, तेन च द्विविधाश्चरत्वाचरत्वलक्षणसङ्गृहीतत्वात् सकलसंसारिसत्त्वराशेः एवमुत्तरत्रापि लक्षणानां व्यापकत्वमभिधेयमिह च सूत्रे लुप्तभावप्रत्ययं पदमुपात्तमिति । वेदैः स्त्रीपुंनपुंसकैस्त्रिविधाः । गतिभिर्नारकतिर्यग्नरामरलक्षणाभिश्चतुर्धाः, करणैः स्पर्शनादिभिरिन्द्रियैः पञ्चविधाः, कायैः पृथ्वीकायादिनिकायैः षड्विधाः । इह च सर्वजीवानां चेतनावत्त्वेनैकरूपाणामेव सत्त्वं, संसारिसत्त्वेषु चरत्वाचरत्वाद्युपाधिद्विविधत्वादिकमवसेयमिति गाथार्थः ॥ २ ॥ तथा—

॥ मूलम् ॥—पुढवी आऊ तेऊ वाऊ वणस्सइ तहेव बेइंदी ।
तेइंदिय चउरिंदिय पंचिंदिय भेयओ नवहा ॥ ३ ॥

व्याख्या--पृथिव्यापस्तेजोयोगात्तेजोऽग्निर्वायुर्वनस्पतिस्तथैव द्वीन्द्रियास्त्रीन्द्रियाश्चतुरिन्द्रियाः पञ्चेन्द्रियाः सोपस्कारत्वादिति भेदान्नवधा जीवा भवन्तीति शेषः । ननु पृथिव्यादीनि जीवशरीराणि काठिन्यादिलक्षणानि, जीवाः

॥१६३॥

पुनरुपयोगलक्षणास्तत्कथं पृथिव्याप इत्यादिभेदतो नवधा जीवा इति? उच्यते—जीवशरीरयोरन्योन्यानुगतत्वेन विभागाभावादेवमुक्तं, न चैतदनार्षं, यत उक्तं—अनुन्नाण गयाणं इमं च तं चत्ति विभज्जणमकुत्तमित्यादि । एवमन्यत्रापि यथासम्भवमूह्यमिति गाथार्थः ॥ ३ ॥ अन्यच्च—

॥ मूलम् ॥—एगिंदिय सुहमियरा सन्नियरपणिंदिया सबितिचऊ ।
पज्जत्तापज्जत्ता—भेएण चउद्दस ठाणा ॥ ४ ॥

व्याख्या—एकेन्द्रियाः सूक्ष्मेतराः सूक्ष्मनामकर्मोदयात्सूक्ष्माः सकललोकव्यापिनो निरतिशयानामदृश्या, इतरे बादरनामकर्मोदयाद् बादराः प्रतिनियतस्थानवर्तिनः । तथा संज्ञिनश्च मनोविज्ञानवन्त, इतरे चासंज्ञिनः पञ्चेन्द्रियाः, सबितिचऊत्ति सूचनात्सूत्रस्य सह द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियैर्वर्तन्त इति, द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियादिभिः सहिताः पूर्वे इत्यर्थस्ते च पर्याप्तापर्याप्तभेदेन चतुर्दश, दीर्घत्वं प्राकृतत्वात्, समुदायोपचाराद् भूतग्रामा जीवस्थानानीत्यर्थ इति गाथार्थः ॥ ४ ॥ पुनः प्रकारान्तरेण जीवभेदानेवाह—

॥ मूलम् ॥—पुढविदगअगणिमारुय—वणस्सयणंता पणिंदिया चउहा ।
वणपत्तेया विगला दुविहा सव्वेपि बत्तीसं ॥ ५ ॥

व्याख्या—पृथिव्युदकाग्निमारुतानन्तवनस्पतय इह च विचित्रत्वात्सूत्रस्य विशेपणस्य परनिपातः, पञ्चेन्द्रियाश्च प्रत्येकं चतुर्धा, चकारमन्तरेणापि समुच्चयोऽत्र गम्यते, इतीह च शिष्येनोक्तं, यथा—अहरहर्नयमानो गामश्वं पुरुषं

पशुम् । वैवस्वतो न तृप्यन्ति सुराया इव दुर्मदी ॥ १ ॥ तत्र पृथिव्यादयः सूक्ष्मबादरपर्याप्तापर्याप्तभेदात्पञ्चेन्द्रियास्तु संज्ञ्यसंज्ञिपर्याप्तापर्याप्तभेदादिति षण्णां चतुर्भिस्ताडनाच्चतुर्विंशतिः । तथा वणपत्तेयत्ति सूत्रत्वादेव प्रत्येकवनस्पतयो 'विगलत्ति' विकलेन्द्रिया द्वित्रिचतुरिन्द्रिया द्विविधा इत्यष्टौ, सर्वेऽपि पूर्वोत्तरसंमीळनाद् द्वात्रिंशदेते सर्वेऽपि सामान्येन व्यवहार्यव्यवहारिभेदाद् द्विविधास्तत्र सूक्ष्मानन्तवनस्पतयो व्यवहारिणोऽव्यवहारिणश्च, शेषास्तु सर्वेऽपि व्यवहारिण एवेति कृतमात्मनो भेदप्रपञ्चनं, प्रसङ्गात् स्वरूपं ब्रूमः । तथाहि—आत्मा शरीरव्यापी, तेन सह कथञ्चिद्भिन्नाभिन्नः, प्रतिदेहं च नैक एव, एकस्य सुखदुःखाद्यनुभवेऽन्येषां तथानुपलम्भाद् न तु विभुः, शरीर एव तल्लिङ्गभूतचैतन्योपलम्भात्, नाप्यङ्गुष्ठपर्वाद्यधिष्ठानः सर्वशरीरव्यापितया चैतन्योपलब्धेः । तथा नैकान्तेन नित्यः, एवं हि पूर्वक्रियाकर्तृत्वस्वरूपापरित्यागादुत्तरक्रियाकर्तृत्वं न स्यात् नाप्येकान्तेनानित्यो, द्वितीयादिसमयेषु सर्वथाभावप्रसङ्गादैहिकामुष्मिकसमस्तव्यवहारविलुप्तेश्च, यदुक्तं—तित्तीसमो किलामो सारक्खदिपक्खपव्वयाईणि । अज्झयणं झाणं भा—वणाय कासव्वणासंमि ॥ १ ॥ तस्मात् द्रव्यार्थतया नित्यः पर्यायार्थतया त्वनित्य इति इह च विचित्रप्रकारैः प्रतिपादितं जीवस्यैव सम्यग्परिज्ञानं सुखेन शेषतत्त्वपरिज्ञानार्थम् । यतः—एको भावः सर्वथा येन दृष्टः सर्वे भावास्तत्त्वतस्तेन दृष्टाः । सर्वे भावाः सर्वथा येन दृष्टा एको भावस्तत्त्वतस्तेन दृष्टः ॥ १ ॥ अत एव प्राणादिद्वाराण्यप्यभिधास्यतीति गाथार्थः ॥ ५ ॥

इह तावद् द्वीन्द्रियादिसंस्थानानि नानाप्रकाराणि साक्षादेव दृश्यन्ते, पृथ्व्यादिशरीराणां त्वतिसूक्ष्मत्वान्न ज्ञायन्ते कीदृशानीति शिष्यजिज्ञासायां तत्संस्थानान्याह—


॥१६५॥

॥ मूलम् ॥—मसूरए थिवुय सुइ पडागाअणेगसंठाणा ।
पुढवीदगअगणिमारुय—वणस्सइणं च संठाणा ॥ ६ ॥

व्याख्या—मसूरकश्च धान्यविविशेषः, एकारः प्राकृतप्रभवः एवमुत्तरत्रापि, स्थिबुकश्च जलबिन्दुः, सूची च प्रसिद्धा, पताका च ध्वजोऽनेकानि च विचित्रद्रव्याणि तेषां संस्थानान्याकारा येषां तानि, तथा क्रमेण पृथिव्युदकाग्निमारूतवनस्पतीनां चः पुनरर्थे, संस्थानानि वपुःपुद्गलरचनाविशेषाः, प्राकृतत्वात् पुंस्त्वं, तदिदमत्र तात्पर्यं—पृथिवीजीवशरीरसंस्थानं मसूरकाकारजीवतनुसंस्थानं स्तिबुकाकारमित्यादि नेयमिति गाथार्थः ॥ ६ ॥ अथ जीवाधिकारे एव यावद् दूरादिन्द्रियाणां स्वविषयग्राहकत्वमाह—

॥ मूलम् ॥—संगुलजोयणलक्खो समहिओ नवबारसुक्कसो विसओ ।
चक्खुत्तियसोयाणं अंगुलअसंखभागियरो ॥ ७ ॥

व्याख्या—स्वाङ्गुलमात्माङ्गुलं तेन निष्पन्नानि योजनानि तेषां लक्षं समधिकं सातिरेकं, नव द्वादश च व्याख्यानात् स्वाङ्गुलयोजनानीत्यत्रापि पदद्वयेऽपि सम्बध्यते, उत्कृष्यत इत्युत्कर्षः सर्वबहुरित्यर्थः । विषयो ग्रहणयोग्यता क्रमेण चक्षुषश्च, त्रयाणां परिशिष्टेः स्पर्शनरसनघ्राणानां समूहत्रिकं च, श्रोत्रं च तेषामिह च योजनलक्षादीनामाकाशदेशत्वेनेन्द्रियाविषयत्वात् तद्गतपुद्गलद्रव्याणामेव विषयत्वमुन्नेयमाधाराधेययोरभेदोपचाराच्चेत्थं भणनमिति । अङ्गुलासङ्ख्यभागवर्ती त्वितरो जघन्यविषयः, सर्वेषां व्याख्यानान्नयनवर्जानामिति ज्ञेयं, चक्षुषस्तु सङ्ख्येयभागवर्त्येव, अतिसन्नि-

कृष्टस्य तेनानुपलम्भात्, तथा च भाष्यं--अवरमसंखेज्जंगुल--भागाओ नयणवज्जाणं । संखेज्जइभागाओ नयणस्स मणस्स न विसयपमाणं ॥ १ ॥ इति । तथेह समधिकः स्वाङ्गुलयोजनलक्षश्चक्षुर्विषयोऽभासुरद्रव्यमधिकृत्य, भासुरं तु द्रव्यमेकविंशतियोजनलक्षेभ्योऽपि परतः पश्यन्ति, यथा पुष्करद्वीपार्धे मानुषोत्तरनगप्रत्यासन्नवर्तिनः कर्कसङ्क्रान्तौ सूर्यबिम्बं तथा चोक्तं--लक्खेहिं एगवीसाए साइरेगेहिं पुक्खरद्धम्मि । उदये पिच्छंति नरा सूरं उक्कोसए दिवसे ॥१॥ इति गाथार्थः ॥ ७ ॥ अथ जीवगतप्राणादिद्वारप्रतिपिपादयिषया गाथामाह--

॥ मूलम् ॥--पाणा पज्जत्तीओ तणुमाणं आउयं च कायठिई ।
लेसासंजमजोणी एएसिं जाणियव्वाइं ॥ ८ ॥

व्याख्या--प्राणन्त्येभिरिति प्राणा इन्द्रियादयः पर्याप्तय आहारादि ग्रहणादि सामर्थ्यानि, तनुमानं शरीरपरिमाण-मेति याति चेत्यायुर्जीवितं, चशब्दोऽनुक्तसमुच्चये सर्गान्ते च सम्भत्स्यते । काये पृथिवीकायादिनिकाये स्थितिः। लेश्याः कृष्णादिद्रव्यसाचिव्यादात्मनः परिणामविशेषाः । यदाहु:--कृष्णादिद्रव्यसाचिव्यात् परिणामो य आत्मनः । स्फटिक-स्येव तत्रायं लेश्याशब्दः प्रयुज्यते ॥१॥ संयमः सावद्याद्विरतिः युवन्ति मिश्रीभवन्ति कार्मणशरीराणि औदारिकादिश-रीरैरासु जन्तवो जुवन्ते सेवन्ते वा इति वा योनय उत्पत्तिस्थानानि, चकाराद्योगोपयोगगुणस्थानमार्गणास्थानानि च एतेषां प्रस्तावाज्जीवानां ज्ञातव्यानीति द्वारगाथार्थः ॥ ८ ॥ अथ यथोद्देशं निर्देश इति न्यायात्प्रथमं प्राणद्वारं विवृणोति-

॥१६७॥

॥ मूलम् ॥—पंचिंदियतिविहबलं नीसासूसास आउयं चेव ।
दस पाणा पन्नत्ता तेसिं विघाओ भवे हिंसा ॥ ९ ॥

व्याख्या—पञ्चेन्द्रियाणि स्पर्शनादीनि, सुप्लोपः प्राकृतत्वाद्, एवमुत्तरत्रापि, त्रिविधं बलं मनोवाक्कायजनितः शक्तिविशेषः। उल्लसति ह्येतत्सम्बन्धादात्मनः सामर्थ्यविशेषः ८। निःश्वसनं निःश्वासोऽधःपवनसञ्चार, उच्छ्वासस्तूर्ध्व- मेताभ्यामेकमेव रूपं, द्वयोरपि शारीरवायुविशेषत्वाद् ९, आयुर्जीवितं १०, चैवेति समुच्चये। एते दश प्राणाः प्रज्ञप्ता- स्तीर्थकृदादिभिः। एतद्व्यतिरेकेण जीवनाभावाद्, अत एव तेषां विघातो वियोजनं भवेद्धिंसा, न तु सर्वथा जीवविनाश- स्तस्याप्रच्युतानुत्पन्नस्थिरैकस्वभावत्वाद्, इह चैकेन्द्रियाणां स्पर्शनेन्द्रियकायबलनिःश्वासोच्छ्वासलक्षणाश्चत्वारो, द्वीन्द्रि- याणां रसनवाग्बलसहिताः षट्, त्रीन्द्रियाणां घ्राणयुताः सप्त, चतुरिन्द्रियाणां चक्षुर्लक्षिताष्टौ, असंज्ञिनां श्रवणोपेता नव, संज्ञिनां तु संपूर्णा दश प्राणा इति गाथार्थः ॥ ९ ॥ अथ पर्याप्तीः प्राह—

॥ मूलम् ॥—आहारसरीरिंदिय—पज्जत्ती आणपाणभासमणे ।
चत्तारिपंच छविय एगिंदियविगलसन्नीणं ॥ १० ॥

व्याख्या—तथाविधाहारपुद्गलग्रहणपरिणामनसामर्थ्यमाहारपर्याप्तिः १। औदारिकादिशरीरत्रयेन्द्रियप्रायोग्यपुद्गला- नामादाने तत्तद्रूपतया परिणमने च सामर्थ्यमाहारपर्याप्तिः। २ इन्द्रियपर्याप्तिः ३, आनापानोचितद्रव्याणां ग्रहणे तद्रू- पतया व्यापारणे च शक्तिरानापानपर्याप्तिः, ४ सत्यासत्यादिचतुर्विधभाषाहेतुपुद्गलानां ग्रहणे तद्रूपतया परिणमने निस्स-

रणे च सामर्थ्यं भाषापर्याप्तिः ५ मनःसमुचितपुद्गलानामवलम्बने मनोरूपतया परिणमने मनने च सामर्थ्यं मनःपर्याप्तिः ६ इह च कृतद्वन्द्वस्याद्यपदत्रयस्य पर्याप्तिशब्देन सह षष्ठीतत्पुरुष उत्तरपदत्रये च द्वन्द्वैकवद्भावाद्विषयसप्तम्येकवचनमिह च वैक्रियाहारकशरीराणां शरीरपर्याप्तिरान्तर्मौहूर्तिकी, शेषास्तु सामायिक्यः। औदारिकशरीरिणां त्वाहारपर्याप्तिरेव सामयिकी, शेषास्तु प्रत्येकमान्तर्मौहूर्तिक्य इति।

अथ पुनः केषां कियत्य इत्याह--चतस्र आहारशरीरेन्द्रियानपानलक्षणाः। पञ्च भाषान्विताः, षडपि च मनः-समन्विताः, क्रमेणैकेन्द्रियाश्च विकलाश्च द्वित्रिचतुरिन्द्रियासंज्ञिस्वरूपाः संज्ञिनश्च, तेषामेता अपि च यथास्वं परिपूर्णाः पर्याप्तनामकर्मोदयवतामेव भवन्ति, केवलमपर्याप्ता अपि ये म्रियन्ते, तेऽप्युच्छ्वासादिपर्याप्तिभिरेव विज्ञेया न तु शरीरेन्द्रियपर्याप्तिभ्यां, यतः परभवायुष्कं बद्ध्वा म्रियन्ते तच्च शरीरेन्द्रियादिपर्याप्त्यपर्याप्तैर्बध्यत इति गाथार्थः ॥१०॥

आहारपर्याप्तिरभिहिता, तत्किं जीवाः सर्वेऽप्याहारका एव किंवा नेत्याह--

**॥ मूलम् ॥--विग्गहगइमावन्ना केवलिणो समुहया अजोगीया।**
**सिद्धा य अणाहारा सेसा आहारगा जीवा ॥ ११ ॥**

व्याख्या--समुदायार्थः स्पष्टः, अवयवार्थस्त्वयं--विग्रहणं विग्रह आनुपूर्वीकर्मोदयाद्वक्रं स्खलनं वक्रीभवनमिति यावत्, तेन गतिर्विग्रहगतिः। इह हि भवान्तरं गच्छतामसुमतां द्वयीगति ऋजुर्वक्रा च, तत्र जीवपुद्गलयोरनुश्रेणिगमनाद्यदा श्रेणिस्थमुत्पादस्थानं भवति तदर्जुगत्यैव एकेनैव समये गच्छति तस्मिन्नेव चाहारग्रहणम् यदा तु विश्रेणिस्थं


॥१६९॥

तदा वक्रमेकं द्वे त्रीणि वा सम्भवन्ति, केचिच्चत्वारीति भणन्ति तत्रैकं वक्रं द्वाभ्यां, द्वे तु त्रिभिः, त्रीणि चतुर्भिश्चत्वारि तु पञ्चभिः समयैः, तत्पुनरित्थं—

विदिसाउ दिसि पढमे बीए पविसइ णाडिमज्झंमि । ऊड्ढं तइए तुरिये य नीइविदिसं दु पंचमए ॥ १ ॥ इति तत्र चाद्यसमये भोक्तव्यशरीराहारः, पर्यन्तसमये त्वागामिशरीराहार आहारपर्याप्तिसमयत्वात्तस्य, मध्यमेषु त्वेकद्वित्रिसमयेषु यथाक्रमं द्विवक्रादिषु केवलकार्मणयोग्यानाहारको व्याख्यातः प्रज्ञप्त्यभिप्रायस्त्वासमयात्प्रभृत्येवानाहारकस्त्रिवक्रैव च विग्रहगतिरिति तथा केवलिनः सम्यक् समन्तत उत्प्राबल्येनात्मप्रदेशान् घ्नन्ति प्रतिक्षिपन्ति स्मेति, यदिवा घ्नन्ति वेद्य-मानगोत्रपुद्गलान् शातयन्ति स्मेति समुद्घताः सूत्रात्वादलोपः, समुद्घातं गता इत्यर्थः । स चेत्थमुत्पन्नदिव्यज्ञान आयुषोऽल्पत्वं वेदनीयस्य प्राचुर्यमवधार्य तत्समतापादनाय दण्डादिक्रमेण चतुर्दशरज्ज्वात्मकं लोकमात्मप्रदेशैरापूरयति । तत्र प्रथममेवावर्जीकरणमान्तर्मौहूर्तिकमुदीरणावलिकायां कर्मप्रक्षेपव्यापाररूपमभ्येति तदनु—प्रथमे समये दण्डं (स्वदेह-विष्कम्भमूर्ध्वमधश्च लोकान्तगामिनं) कपाटमथ चोत्तरे तथा समये । मन्थनमथ तृतीये लोकव्यापी चतुर्थे तु ॥ १ ॥ संहरति पञ्चमे त्वन्तराणि मन्थानमथ पुनः षष्ठे । सप्तमके तु कपाटं संहरति ततोऽष्टमे दण्डम् ॥ २ ॥ इह जीवप्रदे-शानां दण्डतया प्रक्षेपे संहारे च औदारिककायव्यापारादौदारिककाययोग एव, द्वितीयषष्ठसप्तमेषु पुनः प्रदेशानां प्रक्षेप-हारयोरौदारिके तस्य च बहिः कार्मणे वीर्यपरिस्पन्दादौदारिककार्मणमिश्रः, तृतीयचतुर्थपञ्चमेषु तु बहिरौदारिकात्का सं-र्मणकायव्यापारादसहायः कार्मणस्तस्मिन्नेव च समयत्रयेऽनाहारकस्तथा यद्यपि मन्थकरणे कपाटन्यायेनौदारिकस्यापि

यापारः सम्भाव्यते, तथापि कार्मणशरीरयोगी चतुर्थके पञ्चमे तृतीये वेति वचनादसौ कथञ्चिन्नास्तीति मन्तव्यमिति ।
योगिनो मनोवाक्कायव्यापारवन्तो न तथा निरुद्धयोगत्वादयोगिनः शैलेश्यवस्थामास्थिताः । तदध्यारोहणक्रमश्चायं——
इह केवलज्ञानप्रादुर्भावादनन्तरमन्तर्मुहूर्तादि देशोनपूर्वकोटयन्तं कालं केवली विहृत्यान्तर्मुहूर्तावशेषायुः सूक्ष्म-
क्रियमप्रतिपातिशुक्लध्यानतृतीयभेदं ध्यायन् योगनिरोधमारिप्सुः प्रथममेव पर्याप्तमात्रजघन्यमनोयोगिसञ्ज्ञिमनोद्रव्य-
स्तद्व्यापारेभ्योऽसङ्ख्यगुणविहीनानि मनोद्रव्याणि तद्व्यापारं च निरुन्धानोऽसङ्ख्यसमयैस्तत्सर्वनिरोधं करोति । उक्तं
च—पज्जत्तमित्तसन्निस्स जत्तियाई जहन्नजोगिस्स । हुंति मणोदव्वाइं तव्वावारो य जंमित्तो ॥१॥ तदसंखगुणविहीणे
समये समये निरुंभमाणो सो मणसो सव्वनिरोहं कुणइ असंखेज्जसमएहिं ॥२॥ तदनु च प्रथमसमयोत्पन्नसूक्ष्मपनक-
जघन्यकाययोगतोऽसङ्ख्यगुणहीनं काययोगं प्रतिसमयं निरुन्धन् देहत्रिभागं च मुञ्चन्नसङ्ख्येयसमयैरेव सर्वं निरुणद्धि
उक्तं च——तत्तोय सुहुमपणगस्स पढमसमओववन्नस्स । जो किर जहन्नजोगो तयसंखेज्जगुणहीणमेक्केक्के ॥१॥ समए
निरुंभमाणो देहतिभागं च मुंचंतो । रुंभइ स कायजोगं संखाइएहिं चेव समएहिं ॥२॥ तो कयजोगनिरोहो सेलेसी-
भावणामेई । इत्थं योगत्रयनिरोधं विधाय समुच्छिन्नक्रियमनिवर्त्तिशुक्लध्यानचतुर्थभेदं ध्यायन् 'अइउऋऌ' इत्येवंस्वरूप-
ह्रस्वाक्षरपञ्चकस्वल्पप्रयत्नाद्द्रुताविलम्बितोच्चारकालं शैलेश इव शैलेशो मुनिर्निरुद्धयोगतयात्यन्तस्थैर्येण तस्येयमवस्थेति
व्युत्पादितशब्दां शैलेशीमनुभवति, तस्यामवस्थायामयोग्यनाहारकश्च भवतीति । तत्र च वेद्यायुर्नामगोत्रसत्कर्माणि युग-
पत्क्षपयत्यनेन न्यायेन——तय संखेज्जगुणाए गुणसेढीए रइयं पुराकम्मं । समए समए खवयं कम्मं सेलेसिको तेण

॥१७१॥

॥ १ ॥ तय संखेज्जगुणा इति । इहैकादश गुणश्रेणयस्तथाहि—
सम्यक्त्वे १ देशविरता २ विरतौ ३ अनन्तानुबन्धिवियोजने ४ दर्शनक्षपणे ५ शमने ६ उपशान्तमोहत्वे ७ क्षपक-
त्वे ८ क्षीणमोहत्वे ९ सयोगिनि १० अयोगित्वे ११ चेति । ततश्च तस्याः सयोगिगुणश्रेणेर्दलिकान्यपेक्ष्यासङ्ख्य-
गुणेति—सव्वं खवेइ तं पुण निल्लेवं किंचिदुवरिमे समये । किंचिच्च होइ उवरिमेत्ति । ततः—देहादिनिर्मुक्तः प्राप्यायुः-
श्रेणिवीथिमस्पर्शे । समयेनैकेनाविग्रहेण गत्वोर्ध्वमप्रतिघः ॥१॥ सिद्धिक्षेत्रे विमले जन्मजरारोगमरणनिर्मुक्तः । लोका-
ग्रगतः सिध्यति साकारेणोपयोगेन ॥२॥ इति कृतं प्रसङ्गेन एवमेते सितं बद्धमिहाष्टविधं कर्म तदाध्मातं भस्मसाद्-
भूतमेषामिति सिद्धा ध्यानानलनिर्दग्धाष्टकर्मैन्धनाः । उक्तं हि—सियं धत्तत्ति सिद्धस्स सिद्धत्तमुवजायइ । इति ते
चानाहारकाः, प्रथमश्चकारः पूर्वेषां सिद्धेभ्यो वैलक्षण्यख्यापको द्वितीयश्च समुच्चये, शेषा आहारयन्तीत्याहारका इति
गाथार्थः ॥११॥ सप्रसङ्गं पर्याप्तिद्वारमभिहितमथ तनुमानावसरस्तत्र पृथिवीकायानां तावदाह—

॥ मूलम् ॥—अद्दामलयपमाणे पुढवीकाए हवंति जे जीवा ।
ते पारेवयमित्ता जंबुदीवे न माइज्जा ॥१२॥

व्याख्या—सुगमा, नवरमार्द्रामलकं पीलुवृक्षमयूरस्तथा स्थूलकल्पनैवेयं मुग्धधियां सुखावबोधाय, यथा पारापत-
मात्राणि यदि तेषां शरीराणि स्युस्तदा जम्बूद्वीपे न मायुरिति । यावता ततो लघुतरशरीरा अपि सङ्ख्यातद्वीपसमुद्रे-
ष्वपि च नैव मायुः । न चैतन्निरुपपत्तिकममी ह्यसङ्ख्या उत्कृष्टसङ्ख्यायकमपि चानुयोगद्वारेष्वनवस्थितशलाकाप्रति-

शलाकामहाशलाकापल्यसर्षपै प्ररूपयता एक एव चरमोऽनवस्थितपल्यः सङ्ख्येयद्वीपसमुद्रप्रमाणः प्रतिपादित इति गाथार्थः ॥ १२॥ सम्प्रत्ययमाह--

॥ मूलम् ॥--एगम्मि उदगबिंदुम्मि जे जीवा जिणवरेहिं पन्नत्ता ।
तेवि य सरसवमित्ता जंबूदीवे न मायंति ॥ १३ ॥

व्याख्या--गतार्था, केवलमुदकबिन्दुर्यो वालाग्रेऽवतिष्ठते, सर्षपमात्रभणनेन चात्र पृथिवीकायिकशरीरेभ्योऽमीषां सूक्ष्मत्वमाह, एवमुत्तरोत्तरसूक्ष्मत्वं, तेजोवाय्वनन्तवनस्पतिशरीरेष्वपि विज्ञेयं, तत्पुनरसङ्ख्यगुणहीनतयेति ॥ १३ ॥ ननु यद्येवमतिसूक्ष्माणि पृथिव्यादिशरीराणि तत्कथं मांसचक्षुपः पश्यन्तीत्याह--

॥ मूलम् ॥—एगस्स दुण्ह तिण्हव संखेज्जाण जाव ण पासिउं सक्का ।
दीसंति सरीराइं पुढविजियाणं असंखेज्जा ॥१४॥

व्याख्या--विभक्तिव्यत्ययादेकं द्वे त्रीणि वा यावत्सङ्ख्येयानि शरीराणीति योगो, द्रष्टुं न शक्याश्चर्मचक्षुष इति शेषस्तर्हि कथमित्याह--दृश्यन्ते शरीराणि पृथिवीजीवानामसङ्ख्येयानि समुदितानीत्यर्थ इति गाथार्थः ॥ १४ ॥ अन्येषामतिदेशमाह--

॥ मूलम् ॥--आऊतेऊवाउ एसिं सरीराणि पुढविजुत्तीए ।
दीसंति वणसरीरा दीसंति असंखसंखेज्जा ॥ १५ ॥



॥१७३॥

व्याख्या—आपस्तेजोवायुः, किमेषां शरीराणि पृथिवीयुक्त्या दृश्यन्तेऽसङ्ख्येयानि मिलितानीत्यर्थः। तथा 'वणत्ति' वनस्पतिजीवशरीराणि दृश्यन्तेऽसङ्ख्येयानि, सङ्ख्येयानि च, कोऽर्थः—साधारणवनस्पतिनामसङ्ख्यानि, प्रत्येकशरीराणां त्वसङ्ख्यानि केषाञ्चित्, केषाञ्चित्तु सङ्ख्येयानीति इह च प्रत्येकवनस्पतिं विमुच्यैकेन्द्रियाणां बादराणामङ्गुलासङ्ख्यभाग एवोत्कृष्टतो जघन्यतश्च तन्मानं सूक्ष्माणामप्येतदेव, केवलमेतदसङ्ख्येयकं लघुतरमवसेयं, प्रत्येकशरीराणां तूत्कृष्टतो योजनसहस्रं साधिकं, जघन्यतस्त्वङ्गुलासङ्ख्यभाग एतत्पुनरसङ्ख्यसङ्ख्येयानि च दृश्यन्ते इति भ्रुवाणेन सूचितम्। यद्येवं द्वीन्द्रियादिनां किमिति तनुमानं नाभिहितं? सत्यम्, अमीषां लोचनगोचरत्वेन सुज्ञानत्वाद्, अस्माभिस्तु स्थानाशून्यार्थं किञ्चिदुच्यते—

तत्र सर्वेषामपि जघन्यतस्तावदङ्गुलासङ्ख्यभागः, स पुनरपर्याप्तावस्थानां प्रारम्भकाले, उत्कृष्टतस्तु द्वीन्द्रियाणां द्वादश योजनानि, त्रीन्द्रियाणां गव्यूतत्रयं, चतुरिन्द्रियाणां गव्यूतचतुष्टयं, पञ्चेन्द्रियाणां तिरश्चां समूर्छिमानां गर्भजानां च योजनसहस्रं, मनुष्याणां तु संमूर्छिमानामङ्गुलासङ्ख्यभागो, गर्भजानां तु गव्यूतत्रयं, देवानां सप्त नारकाणां पञ्चधनुःशतीत्यलं प्रसङ्गेन, विस्तरार्थिना तु सङ्ग्रहण्यादिग्रन्थान्वेषणं विधेयमिति गाथाचतुष्टयार्थः ॥१५॥ सम्प्रत्यायुर्द्वारं विभणिषुर्गाथायुग्ममाह—

॥ मूलम् ॥—बावीससहस्सा सत्त – सहस्साइं तिन्नि अहोरत्ता।
वाए तिन्नि सहस्सा दसवाससहस्सिया रुक्खा ॥ १६ ॥

संवच्छराणि बारस राइंदिय हुंति अउणपन्नासा ।
छम्मास तिन्निपलिया पुढवाईणं ठिइ उक्कोसा ॥ १७ ॥

व्याख्या--वातवृक्षयोः साक्षादभिधानादन्ते च पृथिव्यादीनामिति भणनात्पृथिव्यप्तेजोवायुवनस्पतिद्वित्रिचतुःपञ्चेद्रियाणां नवानां क्रमेणैतदायुरुत्कृष्टमवगन्तव्यम् । तथा 'दसवाससहस्सिया' इत्यत्रोपात्तो वर्षशब्दः प्रथमगाथायां 'तिन्निअहोरत्ता' इत्येतद्विमुच्य सर्वत्र सम्बध्यते वृक्षग्रहणं च वनस्पतिमध्ये वृक्षाणामेवैतदायुर्भवतीति ज्ञापयति, न तु वल्ल्यादीनां निरुपद्रवस्थानेषु च सर्वेषामेतदायुरवसेयं, जघन्यतस्तु सर्वेषामनन्तवनस्पतीनामुत्कर्षतोऽपि चान्तर्मुहूर्तमेतिगाथाद्वयार्थः ॥ १६ ॥ १७ ॥ अथ कायस्थितिमाह--

॥ मूलम् ॥--असंखोसप्पिणि--सप्पिणीउ एगिंदियाण चउ ।
चउण्हं ता चेव ऊ वणस्सईए उ बोधव्वा ॥ १८ ॥

व्याख्या--अवसर्पन्ति प्रतिसमयं कालप्रमाणं जन्तूनां शरीरायुर्बलबुद्ध्यादिकमपेक्ष्य ह्रासमनुभवन्त्यवश्यमित्यवसर्पिण्यश्च दशसागरोपमकोटाकोटीपरिमाणा उत्सर्पन्त्युक्तन्यायतो वृद्धिमनुभवन्त्यवश्यमित्युत्सर्पिण्यश्च तावत्प्रमाणा एव, उत्लोपः सूत्रत्वात् ततोऽसङ्ख्यशब्दस्यानेन सह कर्मधारयेऽसङ्ख्यावसर्पिण्य एकेन्द्रियाणां चतुर्णां पृथिव्यप्तेजोवायूनां, ताश्चैवावसर्पिण्युत्सर्पिण्योऽनन्ता वनस्पतेः पुनः, स्त्रिया निर्देशः प्राकृतत्वाद् । बोधव्या इहाद्यौ तुशब्दौ पादपूरणे, तथा चोक्तं--तुशब्दो विशेषणपादपूरणावधारणसमुच्चयेषु, तृतीयस्तु विशेषणयोजित एव, इयं चोत्कृष्टतः कायस्थितिरुक्ता,

जघन्यतस्तु सर्वथामन्तर्मुहूर्तमिति। तथेहानन्तकालं कायस्थितिः सामान्येन वनस्पतिजीवान् निगोदजीवान् वापेक्ष्य विज्ञेया, विशेषापेक्षायां तु प्रत्येकवनस्पतीनां तथा निगोदानां बादराणां सूक्ष्माणां चासङ्ख्यकालैव स्थितिः। यदुक्तं--पत्तेयसरीर-पायववणप्फइकाइयाणं भंते केवइयं कालं ठिई पन्नत्ता ? गोयमा ! जहण्णेणं अंतोमुहुत्तं उक्कोसेणं सत्तरिसागरोवमको-डाकोडीओ निओएणं भंतेत्ति० ठिइत्ति० कालओ केवच्चिरं होइ ? गोयमा ! जहण्णेणं अंतोमुहुत्तं उक्कोसेणं अणंतं कालं अणंताओ ओसप्पिणिउसप्पिणीओ, खित्तउ अड्ढाइज्जा पुग्गलपरियट्टा वायरनिगोए पुच्छा--जहण्णेणं अंतोमुहुत्तं उक्कोसेणं सत्तरिसागरोवमकोडीओ सुहुमनिगोए पुच्छा--जहण्णेणं अंतोमुहुत्तं उक्कोसेणं असंखेज्ज कालंति। त्रसेषु पुनः कायस्थितिरिहानुक्तापि सूत्रान्तराद्भण्यते, तत्र सामान्येन वर्षाधिकानि विंशतिः सागरोपमशतानि। विशेषस्तु--वाससहस्स असंखा विगलाण ठिई होइ णायव्वा। सत्तट्ठभवा उ भवे पणिंदितिरिमणुयउक्कोसा ॥ १ ॥ इति गाथार्थः ॥ १८ ॥
अथ लेश्याद्वारमधिकृत्याह--

॥ मूलम् ॥--किण्हा नीला काउ तेउ पम्हा तहेव सुक्का य।
छल्लेसा खलु एया जीवाणं हुति विण्णेया ॥ १९ ॥

व्याख्या--लेशयन्ति श्लेषयन्त्यात्मानमष्टविधेन कर्मणा स्थितिहेतुत्वादिति लेश्याः। तत्र कृष्णवर्णपुद्गल-सन्निधानादात्मनोऽशुद्धतमः परिणामः कृष्णलेश्या नीलवर्णपुद्गलसन्निधानादशुद्धतरपरिणामो नीललेश्या कापोत-वर्णपुद्गलसन्निधानादशुद्धपरिणामः कापोतलेश्या तैजसवर्णपुद्गलसन्निधानाच्छुद्धपरिणामस्तेजोलेश्या पद्मवर्णपुद्गल-

सन्निधानाच्छुद्धपरिणामः पद्मलेश्या शुक्लवर्णपुद्गलसन्निधानाच्छुद्धतमपरिणामः शुक्ललेश्याः । शेषं स्पष्टं, कृष्णादि-द्रव्याणि च सकलकर्मप्रकृतिनिस्यन्दभूतानि, तदुपाधिजन्मानो भावलेश्याः स्थितिहेतवः । यदाह––ताः कृष्णनील-कापोत––तैजसीपद्मशुक्लनामानः श्लेष इव वर्णगन्धस्य कर्मबन्धस्थितिविधात्र्यः ॥ १ ॥ एतासां च वर्णादिविस्तर-स्वरूपमुत्तराध्ययनादिसिद्धान्तादवसेयम् , इह तु नोच्यते ग्रन्थगौरवभयादिति गाथार्थः ॥१९॥ एताश्च दृष्टान्ततः स्पष्ट-तयावगम्यन्त इति दृष्टान्तद्वयसूचनायाह––

॥ मूलम् ॥––मूलं साहपसाहा गुच्छफले छिंदपडियभक्खणया ।
सव्वं माणुसपुरिसे साउह जुज्झंतधणहरणा ॥ २० ॥

व्याख्या––किल केचन षट् पुरुषाः क्षुत्क्षामकुक्षयः प्रचुरतरफलभरावनम्रमेकं जम्बूवृक्षमद्राक्षुस्ततः सर्वेषामपि फलानि जिघत्सूनां कथं पुनरेतानि गृहीतव्यानीति सञ्जातो मनसि मनोरथः । तेषामेकः प्राह मूलं निःस्कन्धं छिन्तेति सर्वत्र योज्यं, यथा पतितस्य शाखिनः सुखमास्वाद्यन्ते फलानि द्वितीयः प्राह शाखाः, स्कन्धप्रभवमूलच्छेदेऽपि तास्वेव फलावाप्तेः । तृतीयः प्राह प्रशाखाः शाखाप्रभवाः, शाखाभङ्गेऽपि प्रशाखास्वेव फलसद्भावात् । तुर्यः प्राह गुच्छान् प्रशाखाप्ररूढान्, प्रशाखाभ्रंशेऽपि गुच्छेष्वेवातुच्छफललाभात् । पञ्चमः फलानि गुच्छाग्रजातानि, तदर्थमेव प्रवृत्तेः । षष्ठः पुनः प्राह पतितानि फलानि यानि सन्ति तान्येव भक्षयत, अलं मूलच्छेदादिभिरिहाद्यः कृष्णलेश्यो यावदन्तिमः शुक्ललेश्यः परिणामतारतम्यादिति । अथवा द्वितीयमुदाहरणं––



॥१७७॥

किल केचन षण्मलिम्लुचाः कञ्चन ग्राममुल्लुण्टयितुं प्रतस्थिरे, ततस्तत्र प्रविशतां तेषामत्रोचदेको यथा--सर्वं तिर्यग्मनुष्यादिकम्, द्वितीयस्तु मानुषान् न पुनस्तिरश्चः। तृतीयः पुरुषान न पुनः स्त्रियः। चतुर्थस्तानपि सायुधान् न पुनः प्रहरणरहितान्, पञ्चमो युध्यमानान् न पुनः सायुधानप्युदासीनान् प्रस्तावात्सर्वत्र हतेति विशेषः षष्ठस्तु धनहरणे-नैव नः प्रयोजनमतो धनमेव हरत, मा कञ्चिद्वधिष्टेत्यर्थः, लेश्योपसंहारस्तु प्राग्वदिति गाथार्थः ॥ २० ॥ सम्प्रति संयमद्वारमाह--

॥ मूलम् ॥--सामाइयं पढमं छेओवट्ठाणं भवे बीयं ।
परिहारविसुद्धीयं सुहुमं तह संपरायं च ॥ २१ ॥
तत्तो य अहक्खायं सव्वम्मि जीवलोगंमि ।
जं चरिऊण सुविहिया वच्चंतियरामरं ठाणं ॥ २२ ॥

व्याख्या--समुदायार्थः सुगमः। अवयवार्थः पुनः कथ्यते, सामायिकं द्विविधमित्वरं यावत्कथिकं च। तत्रेत्वरं भरतैरवतेषु प्रथमचरमजिनतीर्थयोरुपस्थापनायां छेदोपस्थापनीयचारित्रभावेन तद्व्यपदेशाभावाद् यावत्कथिकं च मध्यमतीर्थकरतीर्थेषु महाविदेहेषु चोपस्थापनाभावे तद्व्यपदेशस्य यावज्जीवमपि सम्भवात्, तथा छेदः सातिचारस्य यतेर्निरतिचारस्य वा शैक्षकस्य तीर्थान्तरसम्बन्धिनो वा तीर्थान्तरं प्रतिपद्यमानस्य पूर्वपर्यायव्यवच्छेदरूपस्तद्युक्तोपस्थापना महाव्रतारोपणरूपा यस्मिंस्तच्छेदोपस्थापनम्। परिहारविशुद्धिकं द्विविधं, निर्विशमानकं निर्विष्टकायिकं च, आद्यमासे-

वमानानां, द्वितीयमासेवितचारित्राणामिह च नवको गणस्तत्र चत्वारः परिहारकाश्चत्वारस्तद्वैयावृत्त्यकरा अनुपरिहारका एकस्तु कल्पस्थितो वाचनाचार्यस्तेषामिदं तपः, तथाहि—परिहारियाण उ तवो जहण्णमज्झो तहेव उक्कोसो । सीउण्हवासकाले भणिओ धीरेहिं पत्तेयं ॥ १ ॥ तत्थ जहण्णो गिम्हे । चउत्थ छट्ठं तु होइ मज्झिमओ । अट्ठमिह उक्कोसो इत्तो सिसिरे पवक्खामि ॥२॥ सिसिरे उ जहण्णाई छट्ठाई दसम चरिमगो होइ । वासासु अट्ठमाई बारसज्जंतओ नेओ ॥३॥ पारणगे आयामं पंचसु गहदोसुभिग्गहो भिक्खो । कप्पट्ठिया उ पइदिण करेंति एमेव आयामं ॥४॥ एवं छम्मासतवं चरिउं परिहारगा अणुचरंति । अणुचरगे परिहारिग पइट्ठिए जाव छम्मासा ॥ ५ ॥ कप्पठिओवि एवं छम्मासतवं करेइ सेसाओ । अणुपरिहारिगभावं वयंति कप्पठियत्तं च ॥ ६ ॥

एसो अट्ठारसमास—पमाणो य वन्निओ कप्पो । संखेवो य विसेसो सुत्ताओ तस्स नायव्वो ॥ ७ ॥ कप्पसमत्तीए तयं जिणकप्पं वा उविंति गच्छं वा । पडिवज्जमाणगा पुण जिणस्सगासे पवज्जंति ॥ ८ ॥ तित्थयरसमीवा–सेवगस्स पासेव न उ अन्नस्स । एएसिं जं चरणं परिहारविसुद्धिगं तं तु ॥ ९ ॥ उपशमश्रेणिक्षपकश्रेण्योर्लोभाणुवेदनसमये सूक्ष्मः सम्परायो लोभांशकषायो यस्मिंस्तत्सूक्ष्मसम्परायं, यथाख्यातमर्हत्कथितस्वरूपानतिक्रमवृत्तञ्च छद्मस्थस्योपशान्तक्षीणमोहाख्यगुणस्थानद्वयवर्तिनः सयोग्ययोगिगुणस्थानद्वयस्थायिनः केवलिनश्च भवतीति गाथार्थः ॥ २२ ॥ अथ योनिद्वारं विवृणोति—

॥मूलम् ॥—पुढविदगअगणिमारुय इक्केक्के सत्तजोणिलक्खाओ ।
वणपत्तेय अणंता दस चउद्दस जोणिलक्खाओ ॥ २३ ॥
विगलिंदिएसु दो दो चउरो चउरो य नारयसुरेसु ।
तिरिएसु हुंति चउरो चउद्दसलक्खा उ मणुएसु ॥ २४ ॥

व्याख्या—स्पष्टे, नवरं सर्वमीलनाचतुरशीतिलक्षाणि । अत्र च समानवर्णगन्धरसस्पर्शपरिणामा बह्वयोऽपि व्यक्तय एकैव योनिः । अन्यथा प्रतिव्यक्तियोनिभेदे योनिभूयस्त्वं प्राप्नोतीति । इह चैताः सर्वा अपि सामान्येन सचित्त तन्मिश्र संवृत तन्मिश्र विवृत तन्मिश्र शीतोष्णतन्मिश्रभेदान्नवधा भवन्तीति गाथार्थः ॥ २४ ॥ अधुना योगानाह—

॥ मूलम् ॥—सच्चं मोसं मीसं असच्चमोसं मणो वई अट्ठ ।
काउ उराल विक्किय आहारग मीस कम्मइगो ॥ २५ ॥

व्याख्या—इह प्रथमं तावत्सुखप्रतिपत्तये मनोवाक्काययोगस्वरूपमुच्यते, तत्रात्मना सर्वप्रदेशैर्गृहीता मनोयोग्याः पुद्गलाः शुभादिमननार्थं करणभावमालम्बन्ते तत्सम्बन्धादात्मनः पराक्रमविशेषो मनोयोगः । तथात्मना वाग्योग्याः पुद्गला गृहीता विसृज्यमाना वाक्त्वेन करणतामापद्यन्ते, तेन वाक्करणेन सम्बन्धादात्मनो भाषणशक्तिर्वाग्योगः । कायः शरीरमात्मनो निवासस्तद्योगाज्जीवस्य वीर्यपरिणामः काययोगः । ते चामी त्रयोऽपि मनोवाक्कायसम्बन्धादग्निसम्बन्धादिष्टकादे रक्ततेवात्मनो वीर्यपरिणतिविशेषा मनोवाक्काययोगा इत्युच्यते । यदाह—जोगो विरयं थामो उच्छाहपरक्कमो

तहा चिट्ठा। सत्ती सामत्थं चिय जोगस्स हवंति पज्जाया ॥ १ ॥ एते स्थविरस्य दुर्बलस्य वालम्बनयष्ट्यादिवज्जीवस्योपग्राहका इति। सम्प्रति गाथाव्याख्यानमनुश्रियते—सद्भ्योऽर्थात्पदार्थेभ्यो हितं यथावत्सङ्कल्पनेनेति सत्यं तद्विपरीतं मृषा, मिश्रमुभयस्वभावमसत्यामृषमुभयस्वभावविकलमनोदलिकरूपम्, मन इति मनोयोगः। वेइत्ति चकाराभावेऽपि समुच्चयावगमाद्वाक्सत्यादिरूपेत्यर्थः। तत्र सत्या जीवं जीवमिति प्ररूपयतोऽसत्या जीवमजीवमिति; सत्यामृषा क्वचिद्विवक्षितसमये मनुष्यशतमुत्पन्नमुपरतं चेति। असत्यामृषा तु विधेहि स्वाध्यायम्, नैतत्सदृशमन्यत्तपोऽस्तीत्येवमादि, एवमष्टौ योगाः। तथा काउत्ति काययोग ओरालत्ति उदारं शेषशरीरेभ्यः प्रधानं, प्राधान्यं चेह तीर्थकृद्गणधरशरीरापेक्षया, तदन्यस्यानुत्तरसुरशरीरस्याप्यनन्तगुणहीनत्वाद् यदि वा साधिकयोजनसहस्रप्रमाणत्वेन शेषशरीरेभ्यो बृहत्प्रमाणमुदारं, बृहत्त्वं च भवधारणीयापेक्षमुत्तरवैक्रियं तु लक्षयोजनमानमपि स्यात्।

वैक्रियादिवर्गणान्तः परिस्थूरवर्गणानिष्पन्नत्वेन वा उदारमौदारिकशरीरं तद्योगोऽप्युदारो विविधा विशिष्य वा क्रिया विक्रिया, तस्यां भवं वैक्रियं, तस्यायं योग इति वैक्रियः। आह्रियन्ते गृह्यन्ते तीर्थकरादेः समीपतः सूक्ष्माः पदार्था अनेनेत्याहारकम्। तस्यायमित्याहारकः। तथा मिश्रोऽयमेवौदारिकादिरपर्याप्तकस्य जन्तोस्तत्रोत्पत्तावौदारिकः काययोगः कार्मणेन औदारिकशरीरिणश्च वैक्रियाहारककरणकाले ताभ्यामेव मिश्रो भवतीत्यौदारिकमिश्रः, वैक्रियमिश्रो देवादीनामुत्पत्तिसमये कार्मणेन कृतवैक्रियस्य पुनरौदारिकमिश्राद्धायामौदारिकेण, आहारकमिश्रस्तु साधिताहारककायप्रयोजनस्य पुनरौदारिकप्रवेशे औदारिकेणेति प्रज्ञापनाव्याख्यानाभिप्रायः। कम्मइगुत्ति कार्मणे विग्रहे केवलिसमुद्घाते चेति।

तैजसस्य तु सदैव कार्मणसहचरत्वान्न तद्व्यापारः पृथगिति न तदभिधानमिति काययोगः सप्तधा सर्वमीलने योगाः पञ्चदशेति गाथार्थः ॥ २५ ॥ अथ जीवलक्षणानुपयोगानाह—

॥ मूलम् ॥—णाणं पंचविगप्पं अण्णाणतिगं च सव्वमागारं ।
चउदंसणमणगारं उवओगा बारस हवंति ॥ २६ ॥

व्याख्या—ज्ञायतेऽवबुध्यतेऽनेन वस्तुतत्त्वमिति ज्ञानं, तच्च सम्यग्ज्ञानमेव पञ्च विकल्पा भेदा यस्य तत्तथा, भेदाश्चाभिनिबोधिकश्रुतमनःपर्यवकेवलाख्यास्तत्राभिमुखो योग्यदेशावस्थितवस्त्वपेक्षया नियतः स्वस्वविषयपरिच्छेदकतया बोधोऽभिनिबोधः स एवाभिनिबोधिकमिन्द्रियानिन्द्रियप्रभवमर्थावग्रहादिभेदम् । श्रूयते तदिति श्रुतं शब्दमात्रं तच्च द्रव्यश्रुतमेव, यत्पुनः शब्दमाकर्णयतः स्वयं वा वदतः पुस्तकादिन्यस्तानि वाक्षराण्युपलभमानस्य शेषेन्द्रियगृहीतं वार्थं विकल्पयतोऽक्षरानुरूपं विज्ञानमुपजायते तदिह भावश्रुतमक्षरानक्षरादि । अवधिर्मर्यादा रूपिष्वेव द्रव्येषु परिच्छेदकतया प्रवृत्तिरित्येवंरूपा, तदुपलक्षितं ज्ञानमप्यवधिर्देवनारकाणां तत्प्रत्ययः शेषाणां सविपक्षानुगामिकावस्थितहीयमानभेदात् षोढा । मन इति मनोद्रव्यपर्यायास्तान् परिसमन्तादवगच्छतीति मनःपर्यवं ऋजुविपुलभेदं मनुष्यक्षेत्रवर्तिसंज्ञिमनःपर्यायाणां ग्राहकं, न तु तच्चिन्तितबाह्यवस्तूनां, तेषामनुमानगम्यत्वात्, तथा च—जाणइ बज्झे अनुमाणाउत्ति' केवलमसाधारणमनन्तं वा सकलद्रव्यगुणपर्यायावभासकमिति तथा मिथ्यात्वोदयवतामसदवसायात्मकानि ज्ञानान्यप्यज्ञानान्येव, तेषां त्रिकमत्यज्ञानश्रुताज्ञानविभङ्गरूपं सर्वमिति सुप्लोपः प्राकृतत्वात् । सर्वं ज्ञानमज्ञानं च, सह आकारेण

ग्राह्यार्थसारूप्यलक्षणेन वर्तत इति साकारं विशेषग्राहकमित्यर्थः । तथा चतुर्णां दर्शनानां समाहारश्चतुर्दर्शनं चक्षुर्दर्शनादि, तत्र चक्षुषा सामान्याकारस्य ग्रहणं चक्षुर्दर्शनं, शेषेन्द्रियैर्मनसा वा चक्षुर्दर्शनं, अवधिना त्वाऽवधिदर्शनं, केवलेन पुनः केवलदर्शनम्, न विद्यते आकारो ग्राह्यार्थसारूप्यं यस्य, सामान्याकारग्रहणादनाकारमिह च मनःपर्यवज्ञानं विशेषाकार-ग्राहकमेवेति, न तत्कृतो दर्शनभेदो यदाह—विशेषाने गृह्णानं क्षयोपशमपटयात् । उत्पद्यते मनोज्ञान—मतस्तत्र न दर्शनम् ॥ १ ॥ यत्पुनर्मनःपर्यवज्ञानी क्वचित्सामान्याकारं गृह्णाति तदवधिदर्शनेनैव वेदितव्यं तथा विभङ्गिनो दर्शनमव-धिज्ञानिना समानमेवेति न ज्ञानवत्तत्रापि भेदस्तथाच प्रज्ञप्तिः—ओहिदंसणअणगारोवउत्ताणं भंते किं णाणी अन्नाणी ? गोयमा ! नाणीवि अन्नाणीवि, जे नाणी ते अत्थेगइया तिन्नाणी अत्थेगइया चउनाणी जे अन्नाणी ते नियमा तिन्ना-णीत्ति एवमुपयुज्यन्ते जीवस्य पदार्थग्रहणं प्रति साधनतां भजन्तीत्युपयोगा द्वादश भवन्तीति गाथार्थः ॥२६॥ सम्प्रति जीवस्यैवोत्तरोत्तरविशुद्धिरूपाणि गुणस्थानान्याह—

॥ मूलम् ॥—मिच्छदिट्ठी सासा—यणे य तह सम्मभिच्छदिट्ठी य ।
अविरयसम्मदिट्ठी विरयाविरई पमत्ते य ॥ २७ ॥
तत्तो य अप्पमत्तो नियट्टि अनियट्टि बायरे सुहुमे ।
उवसंतखीणमोहे होइ सजोगी अजोगी य ॥ २८ ॥

व्याख्या—तिष्ठन्ति यथासम्भवमविशुद्धविशुद्धरूपतया गुणा एष्विति स्थानानि अवस्थाविशेषा गुणानां ज्ञानादीनां

॥१८३॥

स्थानानि गुणस्थानानि चतुर्दश भवन्तीत्यनुक्तमपि प्रस्तावाद् ज्ञेयं, तत्र मिथ्या वक्ष्यमाणमिथ्यात्वोदयाद्विपर्यस्ता दृष्टिर्यस्य स तथा गुणस्थानत्वं चास्य भद्रकत्वाद्यपेक्षया १ । आ ईषत्स्वादनं तत्त्वश्रद्धानरसानुभवः सह तेन वर्तत इति सास्वादनोऽनन्तानुबन्ध्युदयतो वक्ष्यमाणौपशमिकसम्यक्त्वात्प्रच्यवमानोऽद्याप्यनुदितमिथ्यात्वश्चेत्यर्थ एकारः सर्वत्र प्राकृतत्वात् २ । तथा सम्यग्मिथ्या च सम्यग्मिथ्या, सम्यग्मिथ्या दृष्टिर्यस्य स तथा वक्ष्यमाणार्धविशुद्धपुञ्जवेदनान्मिश्रदर्शन इत्यर्थः सर्वाण्यप्यव्ययानि समुच्चयार्थानि ३ । न विरतोऽप्रत्याख्यानकषायोदयात् सावद्ययोगेभ्य इत्यविरतः स चासौ वक्ष्यमाणसम्यक्त्वयोगात्सम्यग्दृष्टिश्च स तथा ४ । विरतश्चासौ देशतोऽविरतश्च सर्वतः प्रत्याख्यानकषायोदयाद्विरताविरतः ५ । प्रमत्त इति भीमादिन्यायात्प्रमत्तसंयतः, प्रमाद्यतीति प्रमत्तोऽज्ञानसंशयविपर्ययरागद्वेषस्मृतिभ्रंशयोगदुःप्रणिधानधर्मानादराणां मध्यादन्यतमप्रमादवान् स चासौ संयतश्च सर्वविरतः ६, ॥ २७ ॥ ततश्चाप्रमत्तसंयतो वर्णितप्रमादरहितः ७ । नियट्टित्ति निवृत्तिबादरस्तत्र निवृत्तिमन्तो व्यावृत्ता अध्यवसायतः परस्परविलक्षणा इत्यर्थो बादरा बादरकषाया जन्तवो यत्र स तथा । इयमिह भावना—किलैतस्मिन्नाद्यसमय एवासङ्ख्यलोकप्रदेशतुल्यानि जघन्यादीन्युत्कर्षान्तान्यध्यवसायस्थानानि उत्तरोत्तरेषु च समयेष्वधिकानि, तेषु च जघन्यादुत्कर्षं, प्राक्तनोत्कर्षाच्चोत्तरजघन्यमनन्तगुणविशुद्धं, ततश्च युगपदेतद्गुणस्थानं प्रतिपन्नानां जन्तूनां परस्परमध्यवसायतो वैलक्षण्यं चेत्यर्थ इह च कर्मणां स्थितिघातरसघातादीनपूर्वान् कुरुते, इत्यपूर्वकरणोऽप्ययमुच्यते तत्र पूर्वगुणस्थानेषु यावत्स्थित्तिखण्डकं रसखण्डकं च हतवांस्ततोऽत्र बृहत्तरं हन्ति, तथा बिशुद्धिवशादपवर्तनाकरणेनोपरितनस्थितेरवतार्योदयक्षणानन्तरमन्तर्मुहूर्तकालक्षपणीयानां

प्रतिसमयमसङ्ख्येयगुणवृद्ध्या दलिकानां विरचनं गुणश्रेणिस्तां च प्राक्कालतो गुरीमपवर्तितस्वल्पदलिकां विरचितवान्, इह तु कालतो लघ्वीमपवर्तितभूरिदलिकां च रचयति। तथा शुभप्रकृतिष्वशुभप्रकृतिदलिकानां विशुद्धिवशादनुसमयमसङ्ख्येय-गुणवृद्ध्यानयनं गुणसङ्क्रमस्तमप्यत्रापूर्वं करोति स्थितिबन्धं च पूर्वं दीर्घं कृतवान् इह तु ह्रस्वमिति, अयं चोपशमक्ष-ययोग्यकर्मदलिककरणादुपशमकः क्षपकश्च भण्यते ८। अनिवृत्तयो व्यावृत्त्या बादरा यस्मिन्नसावनिवृत्तिबादरः, प्रतिसम-यमनन्तगुणविशुद्धैकैकाध्यवसायस्थानत्वादस्य युगपदेतत्प्रतिपन्नानां परस्य वशादवैलक्षण्यमित्यर्थोऽयमप्युपशमकः क्षपकश्च ९। सुहमित्ति सूक्ष्मसम्परायस्तत्र समन्तात् परायन्ति पर्यटन्ति जीवाः संसारमेभिरिति सम्परायाः कषाया इह तु शेषाणामनुदयाल्लोभ एव ग्राह्यः, सूक्ष्मः कीट्टीभूतसम्परायो यस्य स तथा, अयमप्युपशमकः क्षपकश्च १०। मोहशब्दस्यो-भयत्र सम्बन्धादुपशान्तो विद्यमान एव करणविशेषाद्भस्मच्छन्नाग्निवदुदयायोगीभूतो मोहो यस्य स तथा उपशमश्रेणेरु-त्तीर्ण इत्यर्थः ११। क्षीणोऽभावमापन्नो मोहो यस्य स तथा क्षपकश्रेणेः परतः केवलोत्पत्तेरर्वाग्वर्ती भवति १२। सयोगित्ति सयोगिकेवली, तत्र सह योगैर्मनोवाक्कायव्यापारैर्वर्तत इति सयोगी, सर्वधनाधनादेराकृतिगणत्वाद् बहुव्रीहेर्म-त्वर्थीयः। सयोगी चासौ केवली च, न च केवलिनो मनोयोगो नास्ति, मनःपर्यवज्ञान्यादिभिर्मनसा पृष्टस्य मनसैव देशनात् १३। योगनिरोधादयोगी, स चासौ केवली च १४। गुणिरूपतया चामीषामभिधानं गुणगुणिनोः कथञ्चि-दनन्यत्वादिति। कालमानं चामीषां——

मिच्छत्तमभव्वाणं अणाइयमणंतयं मुणेयव्वं। भव्वाणं तु अणाइ सपज्जवसियं तु सम्मत्तं ॥ १ ॥ छावलीयं सासाणं



॥१८५॥

समहिय तित्तीससागर चउत्थं । देसूणपुव्वकोडी पंचमगं तेरसं च पुढो ॥ २ ॥ लहुपंचक्खरचरिमं तइयं छट्ठाइ वारसं जाव । इय अट्ठगुणठाणा अंतमुहुत्ता य पत्तेयं ॥ ३ ॥ अयमन्यश्च विशेषः—मिच्छे सासाणे वा अविरयसम्मम्मि अहव गहियम्मि । जंति जिया परलोगे सेसिक्कारसगुणे मोत्तुं ॥ १ ॥ इति गाथार्थः ॥२७॥ एवमियता ग्रन्थेन जीवस्थानानि तद्गतयोगोपयोगगुणस्थानानि च प्रतिपादितानि तानि च गत्यादिद्वारेषु विचार्यन्त इति तान्याह—

॥ मूलम् ॥—**गइ इंदिए काए जोए वेए कसायणाणे य ।**
**संजमदंसणलेसा भवसम्मे सन्नि आहारे ॥ २८ ॥**

व्याख्या—इह प्राकृतत्वात् क्वचिद्विभक्तिलोपात् क्वचित्त्वेकवद्भावस्तत्र गताविति गतिमङ्गीकृत्य ४, इंदिएयत्ति इन्द्रियाण्यङ्गीकृत्य ५, एवं काये पृथिवीकायादौ ६, योगे मन आदौ ३, वेदे स्त्र्यादौ, ३, कषाये क्रोधादौ ४, ज्ञाने मत्यादावुपलक्षणत्वान्मत्यज्ञानादौ च ८, एवमन्यत्रापि यत्र सविपक्षं पदं तत्रायमेव हेतुः, संयमे देशसंयमसामायिकादावसंयमे च ७, दर्शने चक्षुर्दर्शनादौ ४, लेश्यासु कृष्णाद्यासु ६, भीमसेनवत्समुदायशब्दानामवयवेऽपि वृत्तिदर्शनाद्भवसिद्धिकेऽभेद्ये च २, सम्मित्ति सम्यक्त्वे क्षयोपशमिकक्षायिकौपशमिकमिश्रसास्वादनरूपे मिथ्यात्वे च ६, संज्ञिन्यसंज्ञिनि च २, प्रथमश्चकार समुच्चयार्थो, द्वितीयस्त्वेतेषामेव पदानामवान्तरभेदसूचकोऽत एव मूलतश्चतुर्दशसूत्तरभेदापेक्षया तु द्विपष्टिप्रमाणेष्विति गाथार्थः ॥ २८ ॥ किमित्याह—

॥ मूलम् ॥—**एएसु मग्गणठाणेसु जीवगुणजोगुवयोगामगिज्जंति ॥ २९ ॥**

इति वाक्यम्, एतच्चैवं विचित्रतन्त्ररचनाया अत एव नानाछन्दोविशेषैर्विरचनमिति । मार्ग्यन्ते विचार्यन्ते जीवादिपदान्यास्विति मार्गणास्ताश्च तानि स्थानानि च विचारास्पदानि तेषु, शेषं स्पष्टं, तथा यद्यपि पूर्वमेकत्वद्विविधत्वादिभिर्बहुभिः प्रकारैर्जीवस्थानानि प्रतिपादितानि, तथाप्यतिसङ्क्षेपाश्रयणाद् दुरवगमं, विस्तराश्रयणे च 'सङ्क्षेपरुचित्वात्सत्त्वानामनादेयं स्यादिति मध्यमस्थानवर्ती चतुर्दशक एव मार्गणासु मार्ग्यते, अस्यैव सूत्रे प्रायो विचारणात्, तत्र गतिमङ्गीकृत्य तावत्सुरनारकयोः पर्याप्तापर्याप्तसंज्ञिनौ, मनुष्येषु तृतीयोऽसंज्ञ्यपर्याप्तस्तिर्यक्षु चतुर्दशापि जीवस्थानानि १ । इन्द्रियाण्यधिकृत्यैकेन्द्रिये पर्याप्तापर्याप्तसूक्ष्मबादराः, द्वित्रिचतुरिन्द्रियेषु तावेव पर्याप्तापर्याप्तौ द्वौ, द्वौ, पञ्चेन्द्रियेषु पर्याप्तापर्याप्तसंज्ञिनः ४, कायद्वारे स्थावरेषु पञ्चस्वप्येकेन्द्रियेष्विव ४, त्रसेषु शेषा दश ३, योगद्वारे मनोयोगे पर्याप्तसंज्ञी च वाग्योगे पर्याप्तद्वित्रिचतुरिन्द्रियासंज्ञिसंज्ञिनः ५. काययोगे सर्वेऽपि ४ वेदद्वारे पुस्त्रीवेदयोः कर्मग्रन्थाभिप्रायेण पञ्चेन्द्रियेष्विव ४, सूत्राभिप्रायेण तु पर्याप्तापर्याप्तसंज्ञिनावेव, असंज्ञी तु पर्याप्तोऽपर्याप्तो वा नपुंसकवेदो वा, तथा च प्रज्ञप्तिः—

असंज्ञि णं भंते!—गोयमा! नपुंसकवेयगा; नपुंसकवेदे तु सर्वेपि ५, कषायद्वारे चतुर्ष्वपि सर्वेपि ७, संयमद्वारे देशसंयमे सामायिकादिषु च ५, पर्याप्तसंज्ञी, असंयमे तु सर्वेऽपि ८, दर्शनद्वारे चक्षुर्दर्शने पर्याप्तचतुरिन्द्रियासंज्ञिसंज्ञिनः ३ अचक्षुर्दर्शने सर्वेऽपि अवधिदर्शने पर्याप्तसंज्ञिनौ, केवलदर्शने संज्ञिपर्याप्तकः, ९ लेश्याद्वारे आद्यासु तिसृषु सर्वेऽपि, तेजस्यां बादरापर्याप्तकः संज्ञि द्विकं च ३, पद्मशुक्लयोस्तु संज्ञिद्विकं, १० भव्यद्वारे भव्येष्वभव्येषु च सर्वेऽपि, ११

सम्यक्त्वद्वारे क्षायोपशमिकक्षायिकयोः संज्ञिद्वयं, सास्वादनेऽपर्याप्तबादरद्वित्रिचतुरिन्द्रियासंज्ञिसंज्ञिनः संज्ञिपर्याप्तकश्च ७, मिश्रौपशमिकयोः पर्याप्तसंज्ञी, यत्पुनरौपशमिके संज्ञिनमपर्याप्तमपि केचिदिच्छन्ति तन्न युक्तिक्षमं, यतोऽपर्याप्तावस्थायां तथाविशुद्ध्यभावात्तस्यानुत्पत्तेः—अणुबधो १ दय २ माउग—बंधं ३ कालं ४ च सासणो कुणइ ॥ उवसमसम्मदिट्ठी चउण्हमिक्कंपि नो कुणइ ॥ १ ॥ इतिवचनात् पारभविकस्याप्यघटनादिति, मिथ्यात्वे तु सर्वेऽपि, १२ संज्ञिद्वारे संज्ञिनि संज्ञिद्विकमसंज्ञिनि संज्ञिद्विकरहिता द्वादश, १३ आहारकद्वारे आहारकेषु सर्वे, अनाहारके तु सप्तापर्याप्ताः, संज्ञिपर्याप्तकाश्चेति १४ मार्गितानि गत्यादिषु जीवस्थानानि सम्प्रति गुणस्थानानि मृग्यन्ते —तत्र गतिद्वारे देवनारकयोराद्यानि चत्वारि, तिर्यक्षु पञ्च, मनुष्येषु चतुर्दशापि १, इन्द्रियद्वारे एकेन्द्रियविकलेन्द्रियेष्वाद्ये द्वे, पञ्चेन्द्रियेषु चतुर्दश २, कायद्वारे पृथिव्युदकवनस्पतिष्वाद्ये द्वे, तेजोवायुषु प्रथममेव, त्रसकाये चतुर्दश ३, योगद्वारे सामान्येन त्रयोदश, चरमगुणस्थानं त्वयोगिन एवमुत्तरत्रापि भावनीयम् ॥४॥

वेदद्वारे नव ५, कषायद्वारे कषायत्रये नव. लोभे तु दश ६, ज्ञानद्वारे मतिश्रुतावधिष्वविरतादीनि नव, मनःपर्यवे तु प्रमत्तादीनि सप्त, केवले चरमे द्वे, अज्ञानत्रिके त्वाद्ये द्वे, मिश्रदृष्टेरप्यज्ञानवादिनां तु मते त्रीणि, सास्वादनसम्यग्दृष्टेस्त्वनन्तानुबन्धिकषायैरतिदूषितत्वादज्ञानमेव ७, संयमद्वारे सामायिकच्छेदोपस्थापनीययोः प्रमत्तादीनि चत्वारि, परिहारविशुद्धिके प्रमत्ताप्रमत्ते, देशविरतसूक्ष्मसम्पराययोः स्वं स्वं, यथाख्याते चरमाण्यसंयमे त्वाद्यानि चत्वारि ८, दर्शनद्वारे चक्षुरचक्षुर्दर्शनयोराद्यानि द्वादश, अवधिदर्शने त्वविरताद्यानि नव, केवलदर्शने चरमद्विकं ९, लेश्याद्वारे कृष्ण-

नीलकापोतलेश्यास्वाद्यानि षट्, तैजसीपद्मयोः सप्त, शुक्लायां त्रयोदश १०, भव्यद्वारे भव्येषु सर्वाणि, अभव्येषु प्रथममेव ११. सम्यक्त्वद्वारे क्षायोपशमिके चत्वार्यविरतादीनि, क्षायिके त्वेकादश, औपशमिके पुनरष्टौ, सास्वादनमिश्रमिथ्यात्वेषु स्वं स्वं १२, संज्ञिद्वारे संज्ञिषु चतुर्दश, संज्ञित्वं च सयोगिनो द्रव्यमनः प्रतीत्यायोगिनस्तु पूर्वावस्थामसंज्ञिषु मिथ्यात्वसास्वादनौ १३, आहारकद्वारे आहारकेष्वाद्यानि त्रयोदश, अनाहारकेषु मिथ्यात्वसास्वादनाविरतसयोग्ययोग्याख्यानि पञ्चेति १४, मार्गितानि गुणस्थानकानि। सम्प्रति योगानामवसरस्तत्र तावद्येषु पदेषु पञ्चदशापि येषु च त्रयोदशयोगाः सम्भवन्ति तानि लाघवार्थं कथ्यन्ते, तथाहि—मनुजगति १ पञ्चेन्द्रिय २ त्रसकाय ३ काययोग ४ पुं ५ नपुंसकवेद ६ कषाय १० मति ११ श्रुता १२ वध्य १३ चक्षु १४ रवधिदर्शन १५ लेश्याषट्क २१ भव्य २२ क्षायोपशमिक २३ क्षायिक २४ संज्ञि २५ लक्षणपञ्चविंशतिस्थानेषु पञ्चदशापि। तिर्यग्गति १ स्त्रीवेदा २ ज्ञानत्रिका ५ संयमा ६ भव्यो ७ पशमिकसम्यक्त्वसास्वादन ८ मिथ्यात्वे १० ष्वाहारकतन्मिश्रवर्जित १३ मनो १४ वाग्योग १२ मनःपर्यव १३ सामायिक १४ च्छेदोपस्थापनीय १५ चक्षुर्दर्शनेषु १६ त्वौदारिकमिश्रकर्मणवर्जितास्त्रयोदशेति। सम्प्रत्यवशिष्टेषु कथ्यते। तत्र गतिद्वारे सुरनारकगत्योरौदारिकद्विकश्चाहारकद्विकवर्जिता एकादश एकादश। इन्द्रियद्वारे एकेन्द्रियेष्वौदारिकवैक्रियद्विककार्मणा विकलेष्वौदारिकद्विककार्मणासत्यामृषाभाषाः ॥४॥ २ कायद्वारे वायुकाये औदारिकवैक्रियद्विककार्मणाः ५। शेषस्थावरकाये ४ त एव वैक्रियद्विकवर्जाः ३, ३, योग ४ वेद ५ कषाय ६ द्वाराण्युक्तार्थानि। ज्ञानद्वारे केवलज्ञाने सत्या असत्यामृषावाग् २ मनः ३ कार्मणौदारिकद्विकानि ७, ७। संयमद्वारे परिहारविशुद्धिकसूक्ष्म-

सम्पराययोर्वाक्चतुष्टयमनश्चतुष्टयौदारिकाः ९ यथाख्याते त एव कार्मणौदारिकमिश्रसहिताः देशसंयमे तु पूर्वे नव वैक्रियद्विकान्विताः ११ । दर्शनद्वारे केवलदर्शने केवलज्ञानोक्ताः सप्त ९ । लेश्या १० भव्यद्वारे ११ तूक्तार्थे सम्यक्त्वद्वारे मिश्रदृष्टौ वाक्चतुष्टयमनश्चतुष्टयौदारिकवैक्रियाः १०, १२, संज्ञिद्वारे असंज्ञिन्यौदारिकद्विकवैक्रियद्विककार्मणासत्यामृषाभाषाः ६, १३ । आहारकद्वारे आहारकेषु कार्मणवर्जाश्चतुर्दश, अनाहारकेषु कार्मण एवेति १४ गत्यादिषु योगमार्गणा कृता । अथोपयोगा गवेष्यन्ते––तत्र गतिद्वारे सुरनारकतिर्यग्गतिषु मनःपर्यवकेवलद्विकरहिता नव, इह यत्र क्वचिद् ज्ञानदर्शने विवक्षिष्येते तत्र द्विकमित्यभिधास्यते मनुजगतौ द्वादशापि १. इन्द्रियद्वारे एकद्वितीन्द्रियेष्वचक्षुर्दर्शन मतिश्रुतज्ञाने च ३, चतुरिन्द्रियेषु चक्षुर्दर्शनं चतुर्थंपञ्चेन्द्रियेषु सर्वेऽपि २. कायद्वारे स्थावरकायेष्वेकेन्द्रियेष्विव त्रसकाये सर्वेऽपि ३, योगद्वारे सामान्येन सर्वेऽपि ४, एवं वेदद्वारेऽपि, कषायद्वारे चतुर्ष्वपि केवलद्विकहीना दश ६. ज्ञानद्वारे मतिश्रुतावधिमनःपर्यवेष्वाद्यानि चत्वारि ज्ञानानि त्रीणि च दर्शनानि, केवले केवलद्विकमज्ञानत्रिके स्वज्ञानत्रिकमाद्यदर्शनद्वयं च ७.

नन्वु पूर्वं विभङ्गिनोऽप्यवधिदर्शनं प्रतिष्ठितं, तच्चेहाज्ञानात्रिके प्रथमदर्शनद्वयं प्रतिपादयतः कथं न विरुद्ध्यते ? सत्यं, तत्सूत्राशयेन, एतत्पुनः कर्मग्रन्थाभिप्रायेणेति, अत्र विभङ्गिनः सामान्याकारग्रहणम् अचक्षुर्दर्शनेनेति, संयमद्वारे सामायिकादिषु चतुर्ष्वाद्यचतुर्ज्ञानदर्शनत्रिकाणि ७, यथाख्याते तान्येव केवलद्विकयुक्तानि दश, संयमे प्रथमज्ञानत्रयदर्शनत्रये, असंयमे मनःपर्यवसकेवलद्विकवर्जने वा ८. दर्शनद्वारे चक्षुरचक्षुर्दर्शनयोः केवलद्विकरहिता दश, अवधिदर्शने प्रथमचतुर्ज्ञानत्रिकाणि, केवलदर्शने केवलद्विकम् ९ ।

लेश्याद्वारे पञ्चसु केवलद्विकरहिता दश, शुक्लायां तु सर्वेऽपि १० । भव्यद्वारे भव्येषु सर्वेऽपि, अभव्येष्वज्ञानत्रिकमाद्यदर्शनद्वयं च ११ । सम्यक्त्वद्वारे क्षायोपशमिकौपशमिकयोराद्यचतुर्ज्ञानदर्शनत्रिकाणि । क्षायिके तान्येव सकेवलद्विकानि ५ । सास्वादनमिथ्यात्वयोरज्ञानत्रयदर्शनद्वयलक्षणाः पञ्च मिश्रे ज्ञानत्रयदर्शनत्रयरूपाः षट् केवलमज्ञानमिश्राः १२ । संज्ञिद्वारे संज्ञिनि सर्वे, असंज्ञिन्याद्यमज्ञानद्वयं दर्शनद्वयं च १३ । आहारकद्वारे आहारकेषु सर्वे, अनाहारकेषु मनःपर्यवचक्षुर्दर्शनरहिता दशेति १४ । इह च योगद्वारे वाग्योगः कायं विना, मनोयोगश्च वाक्कायव्यतिरेकेण न सम्भवतीति तयोरेव जीवादिमार्गणा, कायस्तु वाङ्मनोभ्यां, वाक् तु मनसा विनापि सम्भवतीति निश्चयनयमतेन तयोस्तद्विनाकृतयोर्जीवादयो मार्ग्यन्ते, तत्र काययोगे आद्यानि चत्वारि जीवस्थानानि, द्वे गुणस्थाने अज्ञानेऽचक्षुर्दर्शनं चेति त्रय उपयोगाः । औदारिकद्विकवैक्रियद्विककार्मणाः पञ्च योगाः मनोरहितवाग्योगे पर्याप्तापर्याप्तद्वित्रिचतुरिंद्रियासंज्ञिनो ८ जीवाः । आद्यौ द्वौ गुणौ औदारिकद्विककार्मणाः सत्यामृषाः ४ स्वरूपा योगाः आद्या अज्ञानद्वयदर्शनद्वयरूपास्तूपयोगाः । मनोयोगे पर्याप्तापर्याप्तसंज्ञिनौ जीवौ चरमवर्जास्त्रयोदश गुणाः कार्मणौदारिकमिश्रवर्जास्त्रयोदश योगा द्वादशोपयोगा इति, निश्चयमतेन चापर्याप्तस्यापि वाङ्मनोयोगौ लभ्येते इति तयोस्तदभिधानमनवद्यमिति । अत्र यन्त्रकस्थापना, यथास्थानं तु योगेषु या मार्गणा सा व्यवहाराभिप्रायेणेति कृतं प्रसङ्गेनेति जीवतत्त्वम् । सप्रपञ्चं जीवतत्त्वमभिहितं, सम्प्रत्यजीवतत्त्वस्यावसरस्तत्र जीवतत्त्वे जीवचतुर्दशक उक्त इह त्वजीवचतुर्दशकमाह—

॥१९१॥

॥ मूलम् ॥—धम्माधम्मागासा तियतियभेया तहेव अद्धा य ।
खंधा देसपएसा परमाणु अजीव चउद्दसहा ॥२९॥

व्याख्या—पदेऽपि पदसमुदायावगमाद्धर्मास्तिकायाधर्मास्तिकायाकाशास्तिकायास्तत्र धारयति गतिपरिणतान् जीवपुद्गलांस्तत्स्वभावतायामिति धर्मः। अस्तयश्चेह प्रदेशास्तेषां चीयत इति कायः सङ्घातोऽस्तिकायः। ततो धर्मश्चासावस्तिकायश्चेति धर्मास्तिकायः सकलदेशप्रदेशानुगसमानपरिणतिमद्विशिष्टं द्रव्यं, एवमुत्तरत्रापि। न धारयति गतिपरिणतावपि जीवपुद्गलांस्तत्स्वभावतायां नावस्थापयति स्थित्युपष्टम्भकत्वात्तस्येत्यधर्मः। आङिति मर्यादया स्वस्वभावापरित्यागरूपया काशन्ते स्वरूपेणैव प्रतिभासन्तेऽस्मिन् पदार्था इत्याकाशः। यदा त्वभिविधावाङ् तदा आङिति सर्वभावाभिव्याप्त्या काशत इत्याकाशः। एते किमित्याह—त्रयः परिमाणमस्येति त्रिकस्ततो वीप्सायां द्विर्वचने त्रिकत्रिको भेदो येषां ते तथा, एकैकस्त्रिभेद इत्यर्थः। तथाहि—धर्मास्तिकायो धर्मास्तिकायदेशो धर्मास्तिकायप्रदेशश्च, एवमुत्तरत्रापि। एवमेतेन च तथैव तेनैवाजीवत्वप्रकारेण अद्धा च कालोऽयं त्वेकविध एव वर्तमानसमयलक्षणो ये पुनरतीतानागतसमयास्तेषां विनष्टानुत्पन्नत्वेन असत्त्वाद्, आवलिकादयस्तु पूर्वसमयनिरोधेनैवोत्तरसमयसद्भाव इति तत्त्वतः समुदयसमुत्पाद्यसम्भवेन व्यवहारार्थमेव कल्पितः। तथा स्कन्दन्ति शुष्यन्ति धीयन्ते च पोष्यन्ते च पुद्गलानां विचटनेन चटनेन चेति स्कन्धाः संहतिविशेषभाजः, पुद्गलाः। दिश्यन्ते प्रदेशापेक्षया असमानपरिणतिरूपत्वेऽपि देशापेक्षां समानपरिणतिमाश्रित्य विशिष्टरूपतया देश्यन्त इति देशाः स्कन्धभागाः, प्रकर्षेण सौक्ष्म्या-

तिशयलक्षणेन दिश्यन्त इति प्रदेशाः । स्कन्धानामेव निरंशा भागाः परमाणव स्तदन्यसूक्ष्मतरासम्भवात्, प्रकर्षवन्तस्ते च तेऽणवश्च परमाणवः । स्कन्धरूपत्वापरिणतनिर्विभागद्रव्यरूपा एवमजीवाश्चतुर्दशधा भवन्तीति गाथार्थः ॥२९॥ एवमेते धर्मास्तिकायादीनां देशादिभेदैश्चतुर्दशधामौलभेदैः पुनरमी कति स्युरित्याह--

॥ मूलम् ॥—धम्माधम्मापुग्गल--नह कालो पंच हुंति अजीवा ।
चलणसहावो धम्मो थिरसंठाणो अधम्मो य ॥३०॥

व्याख्या--पूर्वार्धं सुगमं, नवरममी अचिद्रूपा अकर्तारः, पुद्गलमन्तरेणामूर्ता निष्क्रिया एकैकद्रव्यरूपाश्च, धर्माधर्मावेकजीवप्रदेशप्रमितासङ्ख्यप्रदेशौ लोकव्यापिनौ, आकाशमनन्तप्रदेशं लोकालोकव्यापि, पुद्गलाः पुनरनियता अनियतप्रदेशा लोक एव वर्तन्ते कालस्त्वनन्तसमयात्मको मनुष्यक्षेत्र एव, यदुक्तं—समयावलिकापक्ष—मासर्त्वयन-संज्ञिनः । नृलोक एव कालस्य वृत्तिर्नान्यत्र कुत्रचित् ॥१॥ इति ।

अथैते किंलक्षणा इत्याह--चल्यते गम्यतेऽनेनेति चलनं गमनक्रियाहेतुरेवंविधः स्वभावो यस्य स तथा गति-लक्षण इत्यर्थो धर्मो धर्मास्तिकायः । तथा स्थिरत्वस्य संस्थानं व्यवस्था यस्मादसौ स्थिरसंस्थानो लुप्तत्वभावप्रत्ययस्य व्यधिकरणो बहुव्रीहिः, स्थितिलक्षण इत्यर्थोऽधर्मास्तिकायः, स हि स्थितिपरिणतानां जीवपुद्गलानां स्थितिलक्षण-कार्यं प्रत्यपेक्षाकारणत्वेन व्याप्रियत इति स्थित्यैव लक्ष्यते इति गाथार्थः ॥३०॥ तथा--

॥ मूलम् ॥--अवगाहो आगासो पुग्गलजीवाण पुग्गला चउहा ।
खंधा देसपएसा परमाणू चेव नायव्वा ॥३१॥

व्याख्या--अवगाहन्तेऽवकाशं, लभन्तेऽस्मिन्नित्यवगाह आकाशः, केषामवगाहः स इत्याह--पुद्गलजीवानां, अनेनावगाहकारणत्वमस्याभिहितम् , इह च कालपुद्गलयोः सुज्ञानत्वाल्लक्षणं नाभिहितं, तत्पुनर्वर्तमानलक्षणः कालः, वर्तन्ते तेन तेन रूपेण भावा भवन्ति तान् प्रति प्रयोजकत्वं वर्तना, तथाहि--यदमी शीतातपवर्षादय ऋतुविभागेन भवन्ति, तदवश्यममीषां नैयत्यहेतुना केनापि भाव्यं, स च कालः । शब्दान्धकारोद्योतच्छायातपवर्णगन्धरसस्पर्शादि-लक्षणाः पुद्गलाः, शब्दस्य च पौद्गलिकत्वं मूर्तता च प्रतिघातविधायित्वादिति, उक्तं च--प्रतिघातविधायित्वा-ल्लोष्टवन्मूर्तता ध्वनेः । द्वारवातानुपाताच्च धूमवच्च परिस्फुटम् ॥१॥ अन्धकारादीनां तु पौद्गलिकत्वं चक्षुर्विज्ञानविषय-त्वादित्यलमतिविस्तरेण । अथ पुद्गलाः कतिभेदा इत्याह-पुद्गलाश्चतुर्धा स्कन्धा देशाः प्रदेशाः परमाणवश्चैव ज्ञातव्याः । ननु स्कन्धादिभेदाः पूर्वमुक्ता एव, सत्यं, किन्तु न पुद्गलत्वेनेति गाथार्थः ॥३१॥ अथ कालस्वरूपमाह-

॥ मूलम् ॥--समयावलियमुहुत्ता दियहा पक्खा य मास वरिसा य ।
भणिओ पलिया सागर उसप्पिणिसप्पिणीकालो ॥३२॥

व्याख्या--समयाः परमनिष्कृष्टाः कालविशेषास्ते च प्रवचनप्रतिपादितपट्टशाटिकापाटनदृष्टान्तादवसेयाः । आव-लिका असङ्ख्येयसमयसमुदयलक्षणा, मुहूर्ता द्विघटिकाप्रमाणा, दिवसाश्चतुःप्रहरात्मकाः, पक्षाः पञ्चदशाहोरात्रमानाश्चः-

समुच्चये, मासाश्चद्विगुणा वर्षाणि द्वादशमासानि, पलियत्ति उत्तरपदलोपात् पल्योपमानि, एवं सागरोपमाण्यपि । तत्र पल्योपमप्रमाणं–योजनविस्तृतः पल्य–स्तथा योजनमुच्छ्रितः । सप्तरात्रप्ररूढानां केशाग्राणां स पूरितः ॥१॥ ततो वर्षशते पूर्णे एकैकं केशमुद्धरेत् । क्षीयते येन कालेन तत्पल्योपममुच्यते ॥२॥ पल्योपमदशकोटीकोटयात्मकानि सागरोपमाणि, अवसर्पिण्युत्सर्पिण्यश्च पूर्वोक्तमानाः, किमित्याह–कालो भणित इति सम्बन्धः । इह चानुक्ता अपि प्राणस्तोकलवादयः कालविशेषाः स्वयं ज्ञेया उपलक्षणत्वात् सूत्रस्येति गाथार्थः ॥३२॥ अत्रासितमजीवतत्त्वं शेषाण्याह––

॥ मूलम् ॥—सुग्गइमग्गो पुण्ण दुग्गइमग्गो य होइ पुण पावं ।
कम्मसुहासुहआसव संवरणं तस्स जो नियमो ॥३३॥

व्याख्या–सुगतिः सुदेवत्वसुमानुषत्वलक्षणा तस्या मार्ग इव मार्गस्तत्प्रापकत्वेन, किं ? तत्पुण्यं शुभप्रकृतिरूपं, दुर्गति नारकत्वतिर्यक्त्वकुदेवत्वकुमानुषत्वलक्षणा, तस्या मार्गः पूर्ववत्, चकारः पुण्यपापयोरात्मनो बन्धतत्त्वम्प्रति समत्वमाक्षिपति, तथा चोद्घुष्यते—पुण्यपापक्षयान्मोक्ष इति, भवति पुनः पापम् तथा कर्म मनोवाक्कायव्यापारः, किंविशिष्टं ? शुभाशुभम्, आश्रवः शुभाशुभमनोवाकायव्यापारैर्हि जन्तूनां शुभाशुभकर्माणि श्रवन्ति, तथा चोक्तं —मैत्र्यादिवासितं चेतः कर्म सूते शुभात्मकम् । कषायविषयाक्रान्तं वितनोत्यशुभं पुनः ॥ १ ॥ शुभार्जनाय निर्मिथ्यं श्रुतज्ञानाश्रितं वचः । विपरीतं पुनर्ज्ञेय––मशुभार्जनहेतवे ।॥ २ ॥ शरीरेण सुगुप्तेन शरीरी चिनुते शुभम् । सततारम्भिणा जन्तु–घातकेनाशुभं पुनः ॥ ३ ॥ इति । संवरणं संवर इत्यर्थः, तस्याश्रवस्य यो नियमो नियन्त्रणं निरोध इत्यर्थः, स पुनर्द्वेधा, द्रव्यतो

भावतश्च, तत्र ज्ञानावरणादिकर्मादाननिरोधो द्रव्यसंवरो, भवहेतुक्रियानिरोधस्तु भावसंवरः, स च शैलेश्यवस्थायामिति गाथार्थः ॥ ३३ ॥ तथा—

**॥ मूलम् ॥—तवसंजमेहिं निज्जर पाणिवहाईहिं होइ बंधोत्ति ।**
**कम्माण सव्व विगमो मुक्खो जिणसासणे भणिओ ॥ ३४ ॥**

व्याख्या—तपः संयमाभ्यां निर्जरा, इयमपि सकामाकामभेदाद् द्विधा, तत्र सकामा संयमिनां निर्जरणाभिप्रायेण तैस्तपः संयमविधानाद्, अकामा तु नारकतिर्यगादिजन्तूनां तेषां कर्मनिर्जराभिप्रायविकलानामपि शीतोष्णक्षुत्पिपासादिक्लेशैर्विपाकादेव कर्मनिर्जरणाद्. इह च यद्यपि 'अणुकंपकामनिज्जर' इत्याद्यभिधानादकामनिर्जराया अपि सम्यक्त्वलाभहेतुत्वेनोपयोगित्वं, तथापि प्राधान्यख्यापनार्थं सकामैवाभिहितेति । तथा प्राणिवधादिभिरादिशब्दान्मृषावादादत्तादानमैथुनपरिग्रहमिथ्यात्वकषायदुष्टयोगप्रमादैर्भवति बन्ध एतैश्चाशुभप्रकृतीनामेव बन्धः, सद्वेद्यादीनां तु देवपूजादिभिरिह च – प्रकृतिस्थित्यनुभाग—प्रदेशा विधयोऽस्य तु । प्रकृतिस्तु स्वभावः स्याद् ज्ञानावृत्त्यादिरष्टधा ॥ १ ॥ निकर्षोत्कर्षतः काला—न्नियमः कर्मणां स्थितिः । अनुभावो विपाकः स्यात् प्रदेशोंशप्रकल्पनम् ॥ २ ॥ तथायमपि सम्परायप्रत्ययेर्यापथप्रत्ययभेदाद् द्विधैव, तत्रोपशान्तमोहादर्वाक् सम्परायप्रत्ययः, परतः पुनरीर्यापथप्रत्ययोऽयोगितोऽर्वागिह पुनः साम्परायिक एवोक्त, इतरस्य तु प्रकृतितः सद्वेद्यविषयत्वेन, स्थितितो द्विसामयिकत्वेन, अनुभागतो मन्दानुभागत्वेन, प्रदेशतोऽल्पप्रदेशत्वेन, सत्यविषयत्वान्न विवक्षा, इति वाक्यसमासौ, तथा कर्मणां सर्वविगमो, न तु

देशविगमः, तस्यासंसारं प्रतिक्षणमेव सम्पद्यमानत्वान्मोक्षो जिनशासने भणितोऽनेन शासनान्तरेषु यदन्यथान्यथा मोक्ष-भणनं तत् प्रत्याक्षिपतीति गाथार्थः ॥ ३४ ॥ एवं देवधर्ममार्गसाधुतत्त्वस्वतत्त्वं प्रपञ्चितं, सम्प्रति यदुक्तमेतद्विषयं श्रद्धानं सम्यक्त्वं तद्विवरीपुराह—

॥ मूलम् ॥—**जीवाइ नवपइत्थे जो जाणइ तस्स होइ सम्मत्तं ।**

**भावेण सद्दहंतो अयाणमाणेवि सम्मत्तं ॥ ३५ ॥**

व्याख्या—जीवादिनवपदार्थान् यो जानाति, उत्तरार्धवर्तिनः श्रद्दधच्छब्दस्येहापि सम्बन्धादर्थवशाच्च षष्ठ्यन्ततायां तस्य श्रद्दधत एवेति सम्यक्त्वं, यतोऽस्ति हि स कश्चिदात्मनः परिणामो येन सत्यपि जीवादिस्वरूपावबोधे कस्यचिदेव सम्यक्प्रतिपत्तिर्भवति, न पुनः सर्वस्य, यथा हि सत्यपि दर्शने कस्यचिच्छंक्कादि जायते, अन्यस्त्वन्यथाभावमिति, तत्र कारणविशेषोऽनुमीयते, एवमिहापि, ततश्च जीवादिस्वरूपपरिज्ञानस्य सम्यग्भावहेतुरात्मपरिणामविशेषः सम्यक्त्वं, न तु ज्ञानमेव, अत एव हि ज्ञानाद्यावरणभेदो विषयभेदः कारणभेदो ज्ञानकारणत्वं च सम्यक्त्वस्य श्रुतकेवलिनोक्तमिति । ननु पूर्वं देवादिविषयं श्रद्धानं सम्यक्त्वमभिहितमिह तु जीवादिविषयमिति कथं न विरोधो ? न, देवादीनां जीवादिष्वेवान्तर्भावितत्वाद्. अथैतत्परिज्ञानविकलेषु का वार्तेत्याह—भावेनान्तःकरणेन श्रद्दधति जिनवचनमेव तत्त्वमिति प्रतिपद्यमाने अजानत्यपि सम्यक्त्वं, तत्पुनर्द्रव्यसम्यक्त्वमेव, प्राच्यं तु भावसम्यक्त्वमुक्तं हि—जिणवयणमेव तत्तं इत्थरुई होइ दव्वसम्मत्तं । जेह नाणभावसद्धा परिसुद्धं भावसम्मत्तं ॥ १ ॥ यतः—सम्मं अन्ना य गुणा सुंदरपरि-

णम्मि होइ जा सद्धा । तत्तोणंतगुणा खलु विण्णायगुणम्मि बोधव्वा ॥ २ ॥ इति गाथार्थः ॥ ३४ ॥ तदियता ग्रन्थेन देवो धम्मो मग्गो इत्यादि द्वारगाथापूर्वार्धं व्याख्यातमधुना 'तव्विवरियं' इत्यादिकमुत्तरार्धं विवरितुमाह—

॥ मूलम् ॥—दुविहं लोइयमिच्छं देवगयं गुरुगयं मुणेयव्वं ।
लोउत्तरंपि दुविहं देवगयं गुरुगयं चेव ॥ ३५ ॥

व्याख्या—द्विविधं, लोका जिनमतबहिर्वर्तिनो जनास्तेषु भवं लौकिकं मिथ्यात्वं, कथमित्याह—देवान् गतं प्राप्तं देवगतं देवविषयमित्यर्थ, एवं गुरुगतमपि मुणितव्यं ज्ञातव्यं ज्ञपरिज्ञया प्रत्याख्यानपरिज्ञया च, तत्र देवगत यददेवेष्वपि स्त्रीशस्त्राक्षसूत्रादिसूचितरागद्वेषमोहेषु नाटयाट्टहाससङ्गीताद्युपप्लवविसंस्थुलेषु प्राकृतजननिर्विशेषेषु देवत्वबुद्धया वन्दनपूजनसत्कारादिकरणं, गुरुगतं यदगुरुष्वपि सर्वभोजिषु मिथ्योपदेशिष्वब्रह्मचारिषु महापरिग्रहिषु शाक्यतापसादिषु गुरुत्वबुद्धया वन्दननमस्करणादि, हिंसादिदूषिते मिथ्यादृष्टिनिसेविते धर्मे धर्मबुद्धिरित्येतदपि मिथ्यात्वं, किन्तु देवप्रणेतृकत्वाद् गुरूपदिष्टकत्वाच्च धर्मस्य तद्ग्रहणेनैव ग्रहणमिति न पृथग्भणनं, लोकेभ्यो वर्णितस्वरूपेभ्य उत्तरा ज्ञानादिगुणभाक्त्वादुत्तमा अर्हन्तस्तेषु भवं मिथ्यात्वमपि लोकोत्तरं, तदपि द्विविधं, देवगतं गुरुगतं च, एवोऽवधारणे, तेन नं प्राग्वदत्रापि धर्मविषये मिथ्यात्वं तत्र देवगतं यद्वीतरागेऽप्युपयाचितादिना रागाद्यारोपणम्, उक्तं च—लोगुत्तमदेवम्मिवि नेइ य देवाण जाणि लिंगाणि । इच्छापरिग्गहाईणि तेसिमारोवणं मिच्छा ॥ १ ॥ गुरुगतं तु यल्लोकोत्तरलिङ्गिष्वपि पार्श्वस्थादिषु गुरुत्वबुद्धया वन्दनादिविधानं, प्रपञ्चितं चैतत्पुरस्तादिति गाथार्थः ॥३५॥ अथैतत्परिहारेण फलमाह—

॥ मूलम् ॥—चउभेयं मिच्छत्तं तिविहं तिविहेण जो विवज्जेइ ।
अकलंकं सम्मत्तं होइ फुडं तस्स जीवस्स ॥ ३६ ॥

व्याख्या—सुगमा, नवरं तिस्रो विधाः करणकारणानुमतिलक्षणा यस्य तत् त्रिविधं मिथ्यात्वं, त्रिविधेन मनोवाकायलक्षणेन करणेनेति गम्यमिदेवं भावनागाथा—एयं अणंतरुत्तं मिच्छं मणसा न चिंतइ करेमि । सयमेसो व कारउ अन्नेण कए व सुद्धकयं ॥ १ ॥ एवं वाया न भणइ करेमि अन्नं च न भणइ करेहि । अन्नकयं न पसंसइ न कुणइ सयमेव काएणं ॥ २ ॥ काया न करेमि न य कारवेइ अन्नेणं अन्नकयं न पसंसइ छोडियमहियाहिचिट्ठाहिं ॥ ३ ॥

तथा विवज्जइत्ति, विशेषेण गुरुसाक्षिकत्वलक्षणेन वर्जयति प्रत्याख्याति, अकलङ्कमतिचारकालुष्याभावात्, स्फुटं प्रकटमुद्घाटितशिरस्कतयेति. इह च क्वचित् पञ्चरूप मिथ्यात्वमुपवर्ण्यते, यथा—आभिगहियं अणिभि—ग्गहं च तह अभिनिवेसियं चेव । सांसइय अणाभोगं मिच्छत्तं पंचहा एवं ॥ १ ॥ तत्राभिग्रहिकं पाखण्डिनां स्वस्वशास्त्रनियन्त्रितविवेकालोकानां परपक्षप्रतिक्षेपदक्षाणां भवति । अनभिग्रहिकं तु प्राकृतलोकानां सर्वे देवा वन्दनीया, न निन्दनीया एवं सर्वे गुरवः सर्वो धर्म इति । आभिनिवेशिकं जानतोऽपि यथास्थितं वस्तु दुरभिनिवेशविप्लावितधियो गोष्ठामाहिलादेरिव भवति । सांशयिकं च देवगुरुधर्मेष्वयमयं न वेति संशयानस्य भवति । अनाभोगिकं विचारशून्यस्य एकेन्द्रियादेर्वा विशेषविज्ञानविकलस्य भवतीति गाथार्थः ॥ ३६ ॥ एवं यथा सम्यक्त्वं भवति तथा दर्शितमधुनास्यैव कर्मक्षयमूलकारणत्वं व्यतिरेकरूपतया विभणिषुर्दृष्टान्तमाह—

॥ मूलम् ॥--कुणमाणोवि हि किरियं परिच्चयंतोवि सयणधणभोगे ।
दिंतोवि दुहस्स उरं न जिणइ अंधो पराणीयं ॥ ३७ ॥

व्याख्या--कुर्वन्नपि क्रियां प्रहरणप्रक्षेपादिरूपां, परित्यजन्नपि स्वजनधनभोगान्, सङ्ग्रामैकतान इति हृदयं ददद‌पि दुःखस्योरः, शरीरनिरपेक्ष इत्यर्थः । न जयत्यन्धः परानीकमित्यक्षरार्थो भावार्थः सम्प्रदायगम्यः, स चायं-श्रीवसंतपुरे पूर्वं जितशत्रुरभून्नृपः । तस्यान्धः शब्दवेधी च सूरसेनः सुतोऽजनि ॥ १ ॥ तस्यानुजोऽभवद्वीर--सेनः शूरशिरोमणिः अपरेद्युः परानीकै--र्विष्वक्पुरमरुध्यत ॥ २ ॥ संवर्म्य युद्धश्रद्धालु--रथ ज्येष्ठसुतो रथी । महावीर्यः पुरात्पित्रा वार्यमाणोऽपि निर्ययौ ॥ ३ ॥ शब्दवेधीतया यत्र यत्राश्रौषीदसौ ध्वनिं । तत्र तत्र क्षिपन् बाणा--नवधीद्वैरिणो रणे ॥ ४ ॥ अन्धः कथञ्चिन्निश्चित्य हतशेषैः स वैरिभिः । मौनमास्थाय निपुणैः पाणिग्राहमगृह्यत ॥ ५ ॥ तदाकर्ण्य कनिष्ठोऽस्य भ्राता संवर्म्य निर्गतः । अरींश्चक्रे कथाशेषा--नशेषान् शूरशेखरः ॥ ६ ॥ जयश्रिया समं सूर--सेनं प्रत्यानिनाय सः । प्रत्यूहव्यूहरहित--श्चाभूद्भोगैकभाजनम् ॥ ७ ॥ इति गाथार्थः ॥ ३७ ॥ तदेवं दृष्टान्तमुपदर्श्य दार्ष्टान्तिकमाह--

॥ मूलम् ॥--कुणमाणोवि निवित्तिं परिच्चयंतोवि सयणधणभोगे ।
दिंतोवि दुहस्स उरं मिच्छदिट्ठी न सिज्झइ उ ॥ ३८ ॥

व्याख्या--कुर्वन्नपि निवृत्तिमन्यदर्शनाभिहितां, तद्यथा--पञ्च यमाः पञ्च नियमा इत्यादिकां, तथा परित्यजन्नपि स्वजनधनभोगान्, पञ्चाग्नितपआदिना दददपि दुःखस्योरो मिथ्यादृष्टिर्न सिद्ध्यति, तुरवधारणे, नैव सिद्ध्यति दर्शन-

विकलत्वादन्धकुमारवदसमर्थः कार्यसिद्धये, इति गाथार्थः ॥ ३८ ॥ यत एवं ततः किं कर्तव्यमित्याह--

॥ मूलम् ॥--तम्हाकम्माणीयं जेउमणो दंसणम्मि पयइज्जा ।
दंसणवओ हि सफलाणि हुंति तवणाणचरणाणि ॥ ३९ ॥

व्याख्या--यस्मात्सिद्धिमार्गमूलास्पदसम्यग्दर्शनमन्तरेण न कर्मक्षयः स्यात्तस्मात् कर्मानीकं जेतुमनाः सम्यग्दर्शने प्रयतेत, तस्मिंश्च सति यद्भवति तद्दर्शयति—दर्शनवतो हि हेतौ यस्मात् सम्यग्दर्शनिनः सफलानि भवन्ति तपोज्ञान-चरणानि, चक्षुष्मतो वीरसेनकुमारस्येव सङ्ग्रामप्रवर्तनानि, अतस्तत्र यत्नवता भाव्यमिति गाथार्थः ॥ ३७ ॥ किञ्च चारित्रमप्यतिशेते सम्यग्दर्शनमित्याह--

॥ मूलम् ॥--भट्ठेण चरित्ताओ सुट्ठुयरं दंसणं गहेयव्वं ।
सिज्झंति चरणरहिया दंसणरहिया न सिज्झंति ॥ ३८ ॥

व्याख्या--भ्रष्टेन च्युतेन, कुतः ? चारित्रात् सुष्ठुतरं सुतरां पुनर्बोधिलाभानुबन्धिदर्शनं ग्रहीतव्यं, शक्यमोक्षोपा-यत्वाद्, यदभ्यधायि--जइ न तरसि धारेउं मूलगुणभरं सउत्तरगुणं च । मुत्तूण तो तिभूमी सुसावगत्तं वरतरागं ॥१॥ तथा सिद्ध्यन्ति चरणरहिताः प्राणिनो दीक्षाप्रवृत्त्यनन्तरान्तरान्तकृत्केवलिनो, दर्शनरहितास्तु न सिद्ध्यन्ति, अतो दर्शन-मेव प्रधानं सिद्धिकारणं तद्भावभावितत्वाद्, एतत्पुनर्दर्शननयाभिप्रायादभिधीयते, तत्त्वतस्तु चारित्रमेव दर्शनज्ञानसम-न्वितं मुक्तिकारणं, न पुनः सम्यग्दर्शनमेव, तस्य सर्वगतिष्वपि भावाद्, न च मनुजगतिव्यतिरेकेणान्यासु मुक्तिश्चारित्रा-



॥२०१॥

भावाद्, उक्तं हि--सव्वाओवि गईओ अविरहिया नाणदंसणधरेहिं । ता मा कासि पमायं नाणेणं चरित्तरहिएणं ॥१॥ यद्यप्यन्तकृत्केवलिनश्चरणरहिता अपि सिद्ध्यन्तीत्यभिहितं तदपि नातिपेशलं, यतस्तेषामपि सर्वसंवररूपचारित्रव्यतिरेकेण सिद्धेरभावात्, चारित्रव्यतिरेकेण केवलज्ञानस्याप्यनुत्पादाच्च, तथा च स्वयमेव वक्ष्यति--चरणकरणेहिं रहिओ न सिज्झइ सुट्ठु सम्मदिट्ठीवि । इति गाथार्थः ॥ ३९ ॥ इत्थं सम्यक्त्वस्वरूपमभिधाय तद्भेदानाह—

॥ मूलम् ॥--एगविह दुविह तिविहं चउहा पंचविह दसविहं सम्मं ।
मोक्खतरुबीयभूयं संपइराया व धारेज्जा ॥ ४० ॥

व्याख्या--तत्रैकविधं तत्त्वरुचेः सर्वत्रानुगतत्वात् १. तस्या एव नैसर्गिकाधिगमजातभेदविवक्षया द्विविधं, तत्र नैसर्गिकं जातिस्मरादिप्रभवम्. अधिगमजं तु गुर्वाद्युपदेशात्तत्त्वाधिगमसम्भवम् २. अविवक्षितनिसर्गाधिगमक्षायिकक्षायोपशमिकौपशमिकभेदविवक्षया वेदकस्य क्षायोपशमिकत्वेन विवक्षणात्सास्वादनस्य चानन्तानुबन्धिकषायदूषितत्वेनाविवक्षणाच्च त्रिविधं, तत्र क्षायिकमनन्तानुबन्धिमिथ्यात्वमिश्रसम्यक्त्वप्रक्षयाज्जातम् । ननु सम्यक्त्वक्षये कुतः सम्यग्दृष्टित्वं ? उच्यते—निर्मदनीकृतकोद्रवकल्पा अपनीतमिथ्यात्वपुद्गला एव सम्यक्त्वं, तत्परिक्षये च तत्वरुचिपरिणामानिवृत्तेः प्रत्युत श्लक्ष्णाभ्रपटलापगमे चक्षुर्दर्शनवद्विशुद्धतरापत्तेः क्षायोपशमिकं पुनरेवं--इह कश्चित्प्रवाहतोऽनादिमिथ्यादृष्टिस्तथाविधधर्माचार्यसामग्रीसमवधाने सत्यपूर्वकरणेनाभिमुखीभवन्मिथ्यात्वपुञ्जकान्मिश्रपुञ्जकं करोति, मदनकोद्रवपुञ्जकादिवार्धविशुद्धतरपुञ्जकं, ततोऽपि सम्यक्त्वपुञ्जकमर्धविशुद्धकोद्रवपुञ्जकादिव सर्वविशुद्धतरपुञ्जकं, तच्च निर्मलतयात्मनस्त-

स्वरुचेरावृतिं न करोति, स्वच्छाभ्रपटलगृहकमिव प्रदीपप्रभायास्ततस्तृतीयसम्यक्त्वपुञ्जकं विशिष्टविशिष्टविपाकतो वेदयन् जन्तुः क्षायोपशमिकसम्यग्दर्शनी भण्यते, यत उक्तं--'मिच्छत्तं जमुइन्नं' उदयावलिकास्थं 'तं खीणं उणुइयं तु उवसंतं विष्कम्भितोदयमपनीतमिथ्यास्वभावं चोपशममुच्यते, तत्र विष्कम्भितोदयं शेषमिथ्यात्वं, अपनीतमिथ्यास्वभावं च विशोधितसम्यक्त्वपुञ्ज एव 'मीसीभाव' क्षायोपशमरूपं 'परिणयं वेइज्जंतं, प्रदेशतो मिथ्यात्वं, रसतस्तु सम्यक्त्वं 'खओवसमं'' औपशमिकं तु--उवसामगसेढिगयस्स होइ उवसामियं तु सम्मत्तं। जाव अकयतिपुंजो अखवियमिच्छो लहइ सम्मं ॥ १ ॥ इहाद्यं प्रतीतमेव, द्वितीयं तु विव्रियते--

इह यथाप्रवृत्तिकरणेन सागरोपमकोटाकोटेरन्तर्मिथ्यात्वस्थितिमानीयोदयक्षणादन्तर्मुहूर्तमतिक्रम्यापूर्वकरणानिवृत्तिकरणाभ्यामन्तर्मुहूर्तप्रमाणमन्तरकरणं करोति जन्तुस्ततस्तस्मादधस्तन्युपरितनी चेति मिथ्यात्वस्य स्थितिद्वयं भवति । ततोऽधस्तनीं स्थितिमन्तर्मुहूर्तेन वेदयित्वान्तरकरणं प्राप्तः प्रथमसमयादेवौपशमसम्यक्त्वं लभते, तत्पुनर्न पुद्गलानुभवरूपमपित्वध्यवसायमात्रं, यदुक्तं--ऊसरदेसं दड्ढि--लयं च विज्झाइ वणदवो पप्प। इयमिच्छस्स अणुदए उवसमसम्मं लहइ जीवो ॥ १ ॥ तच्चावस्थितस्वरूपं, यदाह--जं मिच्छस्साणुदओ न हायए तेण तस्स परिणामो। जं पुण सयमुवसंतं न वड्ढए वड्ढिओ तेण ॥ २ ॥ औपशमिकस्य च क्षायोपशमिकादयं विशेषः, क्षायोपशमिकं प्राक्समितमनुसमयमुदेति, प्रदेशतश्च वेद्यते क्षीयते च स्थगितमपि कोद्रवदृष्टान्तात्, नत्वस्मिन्नयं प्रकारोऽस्ति, उदयविष्कम्भमात्रत्वाद्विशून्याहारवद्, अस्मादेव च भ्रश्यन्तो द्वीन्द्रियादिषूत्पद्यन्ते, नान्यस्मादन्यतो झटिति मिथ्यात्वप्राप्त्या षडावलिककालासम्भवाद्.

॥२०३॥

कारकरोचकदीपकभेदतो वा त्रिविधं, कारकं साधूनामिव, रोचकं श्रेणिकादेरिव, दीपकमङ्गारमर्दकादेरिव, वेदकस्य पृथग्विवक्षया चतुर्धा, तत्स्वरूपं च--बावीससंतमोहस्स सुद्धदलियक्खयंमि आढत्ते। जीवस्स चरमसमये अणुभवणे वेयगं होइ ॥ १ ॥ इह च क्षायोपशमिकं समस्तपरिवेषितभोजनसमानं, वेदकं तु चलतुल्यमिति भेदविवक्षा, ईषत्तत्वश्रद्धानत्वेन सास्वादनस्यापि सम्यक्त्वविवक्षया पञ्चविधं, तत्पुनः--उवसमसमत्ताओ चवओ मिच्छं अपावमाणस्स। सासायणसम्मत्तं छावलियं होइ नायव्वं ॥ १ ॥ इह च क्षायिकं साद्यपर्यवसितं, क्षायोपशमिकं तूत्कृष्टतः पूर्वकोटिपृथक्त्वाधिकानि षष्ठिसागरोपमाणि, जघन्यतोन्तर्मुहूर्तम्, औपशमिकमुभयथाप्यन्तर्मुहूर्तं, वेदकमेकसामयिकं, सास्वादनमुत्कर्षतः षडावलिकं, जघन्यतस्त्वेकसामयिकम्। एतेषामेकैकस्य निसर्गाधिगमभेदविवक्षया दशविधं सम्यक्त्वमिति सर्वत्र योगः। निसर्गरुच्यादिभेदतो वा दशविधं, तथाच--निस्सग्गु १ वएसरुई २ आणारुई ३ सुत्त ४ बीयरुई य ५। अभिगम ६ बित्थाररुई ७ विरिया ८ संखेव ९ धम्मरुई १० ॥ १ ॥ रुचिशब्दः सर्वपदेषु दृश्यः, सम्यक्त्वे गुणेऽपि वाच्ये गुणिरूपतयाभिधानं तयोः कथञ्चिदनन्यत्वख्यापनाय एतेषां व्याख्यानगाथाः--जो जिणदिट्ठे भावे चउव्विहे (द्रव्यादिरूपतया) सद्दहाइ सयमेव। एमेव नन्नहत्ति य निस्सग्गरुइत्ति नायव्वो ॥ १ ॥ एए चेव उ भावे उवइट्ठे जो परेण सद्दहइ। छउमत्थेण जिणेण व उवएसरुइत्ति नायव्वो ॥ २ ॥ रागो दोसो मोहो अन्नाणं जस्स अवगयं होइ। (देशत एव न सर्वतः) आणाए रोयंतो (आज्ञयैवाचार्यसम्बन्धिन्या तथेति श्रद्दधानो माषतुषादिवत्) सो खलु आणारुई नाम ॥ ३ ॥ जो सुत्तमहिज्जंतो सुएण ओगाहए उ सम्मत्तं। अंगेण बाहिरेण व सो सुत्तरुइत्ति णायव्वो ॥ ४ ॥ एगप-

एगपएणेगाइं पयाइं जो पसरइ उ सम्मत्ते । उदएव्व तेल्लबिंदू सो बीयरुइत्ति नायव्वो ॥ ५ ॥ तत्त्वैकदेशोत्पन्नरुचिरपि क्षयोपशमविशेषात् समस्ततत्त्वेषु रुचिमान् भवतीत्यर्थः । सोहेइ अभिगमरुई सुयनाणं जेण अत्थओ दिट्ठं । एक्कारसअंगाई पइन्नगादिदिट्ठिवाओ य ॥ ६ ॥ दव्वाण सव्वभावा (पर्यायाः) सव्वपमाणेहिं जस्स उवलद्धा । ( ये यद्विषयास्ते तेन ) सव्वाहिं नयविहिहिं वित्थाररुइत्ति नायव्वो ॥ ७ ॥ विस्तारविषयत्वेन ज्ञानस्य रुचेरपि तद्विषयत्वादस्य ज्ञानपूर्विकाभिरुचिः । दंसणनाणचरित्ते तवविणए सच्चसमिइगुत्तीसु । जो किरिया भावरुई सो खलु किरियारुई नाम ॥ ८ ॥ दर्शनाद्याचारानुष्ठाने यस्य भावतो रुचिरस्तीत्यर्थः । चारित्रान्तर्गतत्वेऽपि तपआदीनां पुनर्भणनं विशेषमुक्त्यङ्गत्वख्यापनार्थम् । अणभिग्गहिय कुदिट्ठी संखेवरुइत्ति होइ नायव्वो । अविसारओ पवयणे अणभिग्गहिओ य सेसेसु ॥९॥ उक्तविशेषणो यः सङ्क्षेपेणैव चिलातीपुत्रवत् प्रशमादिपदत्रयेण तत्त्वरुचिमवाप्नोति स सङ्क्षेपरुचिरित्यर्थः । जो अत्थिकायधम्मं (अस्तिकायधर्मादीनां धर्मं गत्युपष्टम्भादिपर्यायं ) सुयधम्मं खलु चरित्तधम्मं च । सद्दहइ जिणाभिहियं सो धम्मरुइत्ति नायव्वो ॥ १० ॥ धर्मेषु पर्यायेषु धर्मे वा श्रुतधर्मादौ रुचिरस्येति कृत्वा । शिष्यमतिव्युत्पादनार्थं वेत्थमुपाधिभेदेन सम्यक्त्वभेदाभिधानमन्यथा हि निसर्गोपदेशयोरधिगमादौ वा क्वचित् केषाञ्चिदन्तर्भाव इति भावनीयमिति । एवं सम्यक्त्वस्य कर्मक्षयलक्षणमनन्तरफलं तद्भेदाश्च प्रतिपादिताः, सम्प्रति तस्यैव परम्परफलप्रतिपादनपुरस्सरं तत्पालने दृष्टान्तमाह—— सम्यक्त्वं मोक्षतरोर्बीजभूतमनेन मोक्षः, परम्परफलमेतस्येत्यभिहितं, सम्प्रतिराजवद्धारयेत्, सम्प्रदायगम्यश्चायमर्थस्तथाहि——



॥२०५॥

अस्ति वत्सेषु कौशाम्बी नगरी निर्जितालका । वसन्ति धनिनो यस्या--मतिपुण्यधनेश्वराः ॥ १ ॥ तस्यां पुर्याम-थाचार्यौ महागिरिसुहस्तिनौ । युगाग्रण्यावनुग्रामं विहरन्तावुपेयतुः ॥ २ ॥ तत्रैकच्छत्रदुर्भिक्षे भिक्षाहेतोः सुहस्तिनः । साधुसङ्घाटकःप्राप--देकमीश्वरमन्दिरम् ॥ ३ ॥ धन्यंमन्यस्तमानम्य गृहेशः सपरिच्छदः । खण्डखाद्याभिर्भोज्यै--रतिप्राज्यैरुपास्थितः ॥४॥ तदाग्रहाज्जगृहतुः स्तोकस्तोकं तु तौ मुनी । भिक्षाकस्तादृगद्राक्षी--देकस्तद्विस्मितेक्षणः ॥५॥ विवेकलोचनस्यान्धं--करिण्या व्यथितः क्षुधा । प्रगल्भैश्चाटुभिर्भोज्यं प्रार्थयामास तौ ततः ॥६॥ भद्र भक्तं गुरोरेत--दिति तौ प्रत्यवोचताम् । पृष्ठलग्नस्ततस्ताभ्या--मभ्यर्णं सोऽगमद्गुरोः ॥७॥ तद्दर्शनोद्भवानन्द--बाष्पैः खेदं विनुद्य सः । ययाचे भक्तमाचार्यं कारुण्यैकसुधानिधिम् ॥ ८ ॥ भक्तदानाद् भविष्यन्तं । प्रेत्य शासनदीपकम् श्रुतातिशयतो ज्ञात्वा तत्त्ववित्तमभाषत ॥९॥ जिघृक्षुर्वत्स चेद्दीक्षां कक्षीकुरु तदार्हतीम् । इति तं दीक्षितं स्वैरं स्निग्धस्वाद्न्यभोजयत् ॥१०॥ तेनातिमात्रभुक्तेन नक्तं जातविसूचकः । मृत्युमासादयामास प्रणिधानपरायणः ॥ ११ ॥ इतश्च पाटलीपुत्र--मित्यस्ति नगरं गुरु । मौर्यवंशध्वजश्चन्द्र--गुप्तस्तत्राभवन्नृपः ॥ १२ ॥ ततो जनदृशामिन्दु--र्बिन्दुसारनृपोऽजनि । मूर्ध्नां यच्छा-सनं भूपै--र्दध्रे बिन्दुरिवाक्षरैः ॥ १३ ॥ तस्मादासीदशोकश्री--र्भूधरो हिमवानिव । पावनी व्यानशे कीर्ति--गङ्गा यत्प्रभवा भुवम् ॥ १४ ॥ प्राणेभ्योऽपि प्रियः पुण्यै--र्लक्षितो राजलक्षणैः । अभूदायतदोर्नालः कुणालस्तस्य नन्दनः ॥ १५ ॥ अनिष्टशङ्किना मातृ--सपत्नीभ्यः स भूभृता । बालोऽप्यवन्त्यां कौमार--भुक्तौ प्रेम्णा व्यसृज्यत ॥ १६ ॥ राजा स्वहस्तविन्यस्त--वर्णानि लिखितान्यथ । प्राहिणोदन्वहं स्नेहा--मृतस्यन्दीनि सूनवे ॥ १७ ॥ कलाग्रहणकालं च

॥२०६॥

सूनोर्ज्ञात्वान्यदा नृपः । स्वयं लिखित्वा लिखित--मवन्त्यां प्राहिणोदिति ॥ १८ ॥ अधीयतामधिकृता क्षितचिन्ताभर श्चिरम् । कुमारस्त्यक्तनिःशेषा--परव्यापारमादरात् ॥ १९ ॥ असंवृत्यैव तं लेखं देहचिंताचिकीर्षया । नृपः प्रमादादुद्वाटं मुक्त्वा निधिमिवोत्थितः ॥२०॥ नृपपार्श्वोपाविष्टासीत् काचिद्देवी तदा किल । सा लेखं वाचयन्त्युच्चै--रभून्मत्सरपिच्छिला ॥ २१ ॥ दत्त्वा बिन्दुमकारस्य व्यधादंधीयतामिति । कौशलं कुत्सतौ किंचि--दनाचार्यं हि योषिताम् ॥ २२ ॥ निवृत्तेन पुनर्लेखो--ऽप्रतिवाच्यैव भूभृजा । संवर्त्य मुद्रितः स्थूलः प्रमादस्तादृशामपि ॥ २३ ॥ तं राज्ञा प्रेषितं प्रेक्ष्य कुमारः पिप्रियेतराम् । क्षुद्वानिव शिशुः प्राप्य विपाकमपि मोदकम् ॥ २४ ॥ उन्मद्याधिकृतेनोच्चै--र्यावल्लेखः प्रवाचितः । तावदालोकि दुर्वाचं दुःश्रावं चेदमग्रतः ॥ २५ ॥

तदुच्चारणदुःस्थेऽस्मिन् मौनमास्थाय तस्थुषि । उत्सुकस्तत्करात्लेखं कुमारः स्वयमग्रहीत् ॥ २६ ॥ लेखार्थाधिगमेऽध्यासी--दवार्यं मौर्यशासनम् । तच्चेन्मयि स्खलत्यन्यः कस्तदा पालयिष्यति ॥ २७ ॥ इत्यानञ्ज दृशौ सद्यः सन्तप्तायःशलाकया । मामेति तुमुलं जल्प--त्यनल्पं मन्त्रिमण्डले ॥ २८ ॥ किंवदन्ती ददन्ती सा मूर्च्छामूर्वीपतेर्भृशम् । प्राविशत्कर्णयोस्तप्त--त्रपुधारानुकारिणी ॥ २९ ॥ मूर्च्छान्ते शोकसन्ताप--निर्यद्बाष्पप्लुतेक्षणः । विललाप विशामीशो रोदयन्निव रोदसी ॥३१॥ हा वत्स स्वच्छहृदय कुलाधार कलानिधे । विनीत स्फीतदाक्षिण्य विवेकिन् मधुराकृते ॥ ३२ ॥ किमेवमविविच्यैव विमर्शकशिरोमणे । व्यधास्त्वं निर्घृणं कर्म मम भाग्यविपर्ययात् ॥ ३३ ॥ सञ्जातश्चैवमुर्वीशः शोकोत्कर्षवशांदशाम् । कथञ्चिन्मन्त्रिभिर्विद्या--वयोवृद्धैरबोध्यत ॥ ३४ ॥

॥२०७॥

राज्यानर्ह इति ग्राम--मेकं दत्त्वास्य जीवने । उज्जयिन्याः प्रभुत्वेऽन्य सुतं राजा न्ययोजयत् ॥ ३५ ॥ न्यायेन लालयन् ग्राम--लोकं गीतकलाप्रियः । कुणालः कालममर--कुमारक इवानयत् ॥ ३६ ॥ स रङ्कजीवस्तत्रास्य सुतत्वेनोदपद्यत । ततः कुणालो राज्यार्थी पाटलीपुत्रमाययौ ॥ ३७ ॥ तत्रात्मवश्यतां पौरान् मृगानिव नयन्नयम् । विपञ्चीश्रुतिभिः स्फीतं प्रगीतोद्गीतमद्भुतम् ॥३८॥ तद्गीतकलया सद्यो बन्दितामधिरोपिताः । तं राज्ञः पुरतः पौरा वर्णयामिति चक्रिरे ॥ ३९ ॥ अस्ति कश्चिदिहायतो देव सम्प्रति गायनः । यस्य श्रेष्ठा कला गीतौ वर्ण्यते किमतःपरम् ॥४०॥ ततस्तमाह्वदुर्वीशः कौतुकोत्सुकमानसः । व्यङ्गत्वाच्चान्तरे कृत्वा प्रतिशीरामजीगपत् ॥ ४१ ॥ बभाण प्रीतितोऽत्यर्थ--मथ गीतामृतोर्मिभिः । हंहो वृणु वरं स्वैरं त्वं गाथकमतल्लिक ॥ ४२ ॥ कलितावसरः काल--वेदी स्वाजन्यसूचकम् । जगौ प्रगल्भकलावाक् कुणालः श्लोकमीदृशम् ॥४३॥ प्रपौत्रश्चन्द्रगुप्तस्य बिन्दुसारस्य नप्तृकः । अशोकश्रीतनुजोऽन्धो याचते तात काकिणीम् ॥ ४४ ॥ चिरं रूढमपि प्राच्य--शोकमुद्भिन्नमुद्वहन् । तस्मात्तद्वचसः खड्ग--प्रहारमिव गर्जितात् ॥ ४५ ॥ आगच्छागच्छ वत्सेति दूरोदश्चद्भुजो नृपः । आहूय सस्वजे सूनुं वक्षः सिञ्चन् घनाश्रुभिः ॥ ४६ ॥ युग्मं ॥ स गद्गदमवादीच्च याच्योऽहं त्वं च याचकः । काकिणीति त्वया क्षुद्रं किमेतद्याचितं ततः ॥४७॥ अथोक्तं मन्त्रिभिर्नाल्प--मिदं किन्तु बहु प्रभो । राज्यं हि काकिणी राज्ञां कुमारस्तदयाचत ॥४८॥ सास्रं प्राह नृपः पुत्र राज्यं लभ्यं त्वया भृशम् । त्वेन्नेत्रे हरता किन्तु वेधसा न खलायितम् ॥ ४९ ॥

सोऽभ्यधात्तात राज्याय मौक्तिकायोषबिन्दुवत् । नार्होऽस्मि नूनमर्हस्तु सुतो मे मेघबिन्दुवत् ॥ ५० ॥ राजोचे ते

दर्शन० टीका ॥२०८॥

कदा सूनुः सोऽभ्यधात्तात सम्प्रति । ततः प्रीतः सुतं वेगा––दानयेत्यादिशन्नृपः ॥ ५१ ॥ तमानीतं ततः पश्यन् विनिद्रैः स्वैर्विलोचनैः । भूभृन्नाङ्गेषु मातिस्म विस्मयस्मेरमानसः ॥ ५२ ॥ तेनारुणकरेणोच्चै––र्बालेनोत्सङ्गसङ्गिना । भास्वता भूभृतां मध्येस पूर्वाद्रिरिवाबभौ ॥ ५३ ॥ पित्रा यत्सम्प्रतीत्युक्तं तेन नामक्रियोत्सवे । भूपतिः सम्प्रतिरिति बालकस्याभिधां व्यधात् ॥५४॥ निर्विघ्नमनयद् वृद्धिं कलाः किञ्चाध्यजीगपत् । उज्जयिन्यां च साम्राज्ये प्रौढिप्राप्तमतिष्ठिपत् ॥ ५५ ॥ तस्यासीत्प्रतापास्य शासनं मनुजेश्वराः । अवचूलकलां निन्यु––र्दुरतिक्रमविक्रमाः ॥ ५६ ॥ किञ्चार्धभरतक्षेत्रे नासीत्कश्चिदसौ नृपः । नास्मै ननाम सम्प्रीत्या प्राभृतीकृतवैभवः ॥ ५७ ॥ आचन्द्रगुप्ताद्वर्धिष्णु––र्मौर्यवंशः शनैः शनैः । सम्प्रतिनृपतौ प्रापत् परां वृद्धिं श्रियान्विताम् ॥ ५८ ॥ अन्यदा वन्दितु जीव––त्स्वामिनीं प्रतिमां गुरुः । समवासरतां तत्र महागिरिसुहस्तिनौ ॥ ५९ ॥

तत्राथ रथयात्रायां राजमन्दिरमीयिवान् । पुरःप्रसृमरोद्दाम––नानानाट्योत्सवोत्सवो रथः ॥ ६० ॥ तत्र वातायनासीनः सम्प्रतिः पृथिवीपतिः । सङ्गसङ्गतमद्राक्षी––द्गुरुमार्यसुहस्तिनम् ॥ ६१ ॥ तत्तत्क्वचिदमूनस्मि दृष्टपूर्वी मुनीश्वरान् । इत्यूहां चक्रिवान् यावत् तावत्प्राग्जातिमस्मरत् ॥ ६२ ॥ ततश्चिन्तामणेर्लाभा––दधिकं मुदमुद्वहन् । कल्याणिभक्तिरागत्य वन्दतेऽसौ गुरुक्रमान् ॥ ६३ ॥ आख्यद्विस्तरतस्तस्य धर्मं जैनेश्वरं गुरुः । प्रकाशयितुमात्मान––मप्राक्षीदथ पार्थिवः ॥ ६४ ॥ भगवन् कथयाव्यक्त––सामायिकफलं किमु । गुरुर्जगाद राज्यादि––रव्यक्तसमताफलम् ॥६५॥ सञ्जातप्रत्ययेनोक्त––मेवमेतन्न संशयः । परं प्रत्यभिजानीत मां नवेति निवेद्यतां ॥ ६६ ॥ श्रुतोपयोगाद्विज्ञाय प्राग्भव



॥२०९॥

भगवानथ । प्राह प्रत्यभिजानामि शिष्योऽभूः प्राग्भवे मम ॥ ६७ ॥

एवं संवादितज्ञानि --पादपीठेऽलुठन्नृपः । भवत्प्रसादविस्फुर्ति--रेषेति स्तुतवान् गुरुम् ॥ ६८ ॥ तदाप्रभृति सम्यक्त्व--मूलं धर्ममगारिणाम् । प्रपेदे गुरुपादान्ते शङ्कादिभिरकश्मलम् ॥ ६९ ॥ शृण्वानः श्रुतमश्रान्त--श्रद्धासंशुद्धमानसः । जीवाजीवादितत्त्वानि समन्तादधिजग्मिवान् ॥ ७० ॥ विधिना जिनवेश्मानि तद्बिंबानि च निर्ममे । तेषां च स्थापनान्युच्चैः प्राज्यन्यास्यवस्तुव्ययात् ॥ ७१ ॥ परः सहस्रैर्भूभृद्धि--राहम्प्रथमिकैर्वृतः । रथयात्रां व्यधात् कुर्वन् रथे पुष्पादिरोहणम् ॥ ७२ ॥ तासु वासःफलस्मेर--पुष्पपाद्यकपर्दकान् । रथारूढो निचिक्षेप दिक्षु कृत्यविचक्षणः ॥७३॥ अग्रण्यं सर्वपूज्यानां श्रीसङ्घं भृशमार्चिचत् । आचार्यैः पटहध्वानै--रमारिमुदघोषयत् ॥ ७४ ॥ किं बहुना ? तथा कथञ्चिज्जैनेद्रं सिषेवे धर्ममात्मनि । अजीगमद्यथा सात्म्यं सम्प्रतिः परमार्हतः ॥ ७५ ॥ कुलकम् । अन्यदा प्राग्भवोद्भूत--क्षुदातङ्कस्मृतेर्नृपः । उज्जयिन्याश्चतुर्दिक्षु सत्रागाराण्यचीकरत् ॥ ७६ ॥ गुणग्रानगुणः स्वीयः परो वेत्यविशेषितं विश्रब्धस्तेषु भुक्त्वाथ सुष्वाप प्रमदाज्जनः ॥ ७७ ॥ भक्त्या विज्ञपयामास गुरुं चार्यसुहस्तिनं । अनुगृह्णीत मां भक्तपानादिग्रहणाद्विभो ॥७८॥ प्रत्यवोचन्नृपं सूरिः कल्याणी ते मतिर्नृप । किन्त्वाद्यान्तिमतीर्थ्यानां राजपिण्डो न कल्पते ॥७९॥ आहूय सत्राधिकृता--नन्येद्युरवदन्नृपः । सत्रेष्वन्नादिना भुक्तशेषेण क्रियते किमु ॥८०॥ अवदंस्ते तदस्माकं भवनेषूपयुज्यते । ततस्तानादिशद्भद्रा-- स्तत्साधुभ्यः प्रयच्छत ॥ ८१ ॥ अहं वो वितरिष्यामि मूल्यं बत समर्गलम् । यन्नामी राजपिण्डस्यात् किञ्चिद् गृह्णन्ति मद्गृहे ॥८२॥ एवं पौपिकसार्पिष्क-प्रमुखा वणिजः स्वयम् । राज्ञा सप्रणयं

प्रोक्ताः प्रदाने स्वस्वस्वस्तुनः ॥ ८३ ॥ राजाज्ञा स्यात्कृता पुण्यो--पार्जना च यथातथा । इत्यालोच्य वचो राज्ञः सर्वे ते बहु मेनिरे ॥ ८४ ॥ ततः स्वादिष्टपानान्न--खाद्यादीन्यादराज्जनैः । वस्त्रपात्राणि चात्यर्थं प्रत्यलाभ्यन्त साधवः ॥ ८५ ॥ महागिरिश्च तद् ज्ञात्वा--नुशास्ति स्म सुहस्तिनम् । आर्येदं भक्तपानादि नैषणाशुद्धिमृच्छति ॥८६॥ शिष्यानुरागतः सोऽपि तदवद्य विदन्नपि । अपह्नुते स्म हि मोह--स्तादृशेष्वप्यनर्गलः ॥ ८७ ॥ प्रभो नैवात्र शङ्कापि कार्या यस्मादसौ प्रजा । भाक्तिकं वीक्ष्य राजन--मस्मानाद्रियतेतराम् ॥ ८८ ॥ यदुक्तं--राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः । राजानमनुवर्तन्ते यथा राजा तथा प्रजा ॥ ८९ ॥ आः किमस्मात्परं पापं यदकृत्यं विदन्नपि। सेवते किञ्च कृत्यत्वं तस्यैव स्थापयत्यसौ ॥ ९० ॥ तदुत्पथस्थितस्यास्य सहावासेन किं मम । इति बुद्ध्या व्यधात्तस्य विसम्भोगं महागिरिः ॥ ९१ ॥ युग्मं ॥ सुहस्तिनि ततः सद्यो विवेकः कश्चिदुद्ययौ । अन्योन्यघर्षणाज्जात--श्चित्रभानुरिवारणौ ॥ ९२ ॥ ततोऽसौ गर्हमाणः स्वं पादलग्नो महागिरिम् । प्रतिपद्य स्वकं दोषं क्षमयामास तत्क्षणात् ॥ ९३ ॥

प्रायश्चित्तं वितीर्यार्य--महागिरिरमुं रयात् । अन्तश्चकार मण्डल्याः सन्तो हि प्रह्ववत्सलाः ॥९४॥ अन्यदा सम्प्रतिर्भूपः सर्वानाजूहवन्नृपान् । अनार्यानार्यमूर्धन्यो जैनशासनभावितः ॥ ९५ ॥ धर्मं विस्तरतस्तेषा--माचचक्षे विचक्षणः । सर्वतो गमयित्वा च ग्राहयामास दर्शनम् ॥९६॥ प्रभुश्चेदस्मि वः सम्यग् भवत श्रावकास्तदा । एतदेवार्थये युष्म--न्नार्थादीत्यादिदेश च ॥९७॥ तेऽभिनन्द्य वचो राज्ञः स्वदेशेषु तदाज्ञया । ययुर्धन्यतमम्मन्याः प्राप्त्या धर्ममहानिधेः ॥ ९८ ॥ ततस्ते स्वीयदेशेषु चण्डडिण्डिमवादनात् । अहिंसां घोषयामासुः सम्प्रतिभक्तमानिनः ॥९९॥ चक्रुश्च

॥२११॥

त्यानि तेष्वर्ह--च्चारुबिम्बान्यतिष्ठिपत् । रथांश्च रथयात्राश्च व्यधुः सम्प्रतिराजवत् ॥ ९९ ॥ अथान्यदा पुनस्तेषां धर्मे स्थैर्यविधित्सया । श्रीसुहस्तिनमाचार्य--मवन्तीशो व्यजिज्ञपत् ॥१००॥ प्रभो प्रत्यन्तविषयान् बोधयन्तो महर्षयः । विहरन्ति न किं सत्त्वो--पकारे ह्यादरः सताम् ॥१॥ आचार्यः प्रत्यवोचत्ते कल्प्याकल्प्यं तथैषणाम् । न जानन्ति तदेषु स्या--न्मुनीनां विहृतिः कथम् ॥२॥ मुनिचर्याबहिर्भूते--ष्वनार्येषु हि जग्मुषः । प्रायश्चित्तसमापत्ति--र्यतेः सूत्रे निगद्यते ॥३॥ ततस्तान् भावयामास मुनिवेषधरैर्भटैः । अनार्यदेशान्नृपति--रसाध्यं किं हि धीमताम् ॥४॥ तैर्भैक्ष्य-मेषणापूर्वं गृह्णद्भिः सर्वतस्तदा । कल्प्याकल्प्यं च जल्पद्भि--र्भावयामासिरे जनाः ॥५॥ ततस्तेषु सुखं साधु--विहारः समजायत । क्षेत्रेषु बीजनिक्षेप इव कृष्टेषु धीधनैः ॥६॥ कुद्दुकान्ध्रमहाराष्ट्र--द्रविडाद्यास्तदादितः । अनार्यदेशाः साधूनाम् जग्मुः सुखविहारताम् ॥७॥ श्रीमान् सम्प्रतिराजेन्द्रो मौर्यवंशोज्ज्वलध्वजः । परःसहस्रैर्दुर्धर्षैः सैन्यैरिव गुणाद्भुतैः ॥८॥ नातिक्रामन् क्वचिद्रत्न--त्रयीं शक्तित्रयीमिव । धर्मं न्यायमिव स्थाने प्रयुञ्जानश्चतुर्विधम् ॥९॥ पुरस्कुर्वन्नुपायज्ञ--ममात्यमिव सद्गुरुम् । समूलघातमाहत्य मिथ्यात्वमिव शात्रवम् ॥१०॥ इत्थं स्वस्येव जैनस्य निस्सीममहिमावधिः । श्रीशासनस्य साम्राज्य--मेकच्छत्रमसूत्रयत् ॥११॥ इत्थं यथा परिपचेलिमपुण्यलभ्य--मुच्चैस्तरामधृतसम्प्रतिभूमिपालः । तद्वद् बुधाः शिवपद्रुमबीजभूत--मव्याहतं वहत दर्शनरत्नमेतत् ॥१२॥ इति गाथार्थः ॥४०॥ अथ सम्यक्त्वयोग्यमाह--

॥ मूलम् ॥--भासामइबुद्धिविवेग--विणयकुसलो जियक्ख गंभीरो ।
उवसमगुणेहिं जुत्तो निच्छयववहारनयनिउणो ॥ ४१ ॥
जिणगुरुसुयभत्ति--रओ हियमियपियवयणजंपिरो धीरो ॥
संकाइदोसरहिओ अरिहो सम्मत्तरयणस्स ॥ ४२ ॥

व्याख्या--भाषा सावद्येतररूपा, मतिर्मेधा यथास्थितशास्त्रार्थविवेचनं, बुद्धिरौत्पत्तिक्यादिका, विवेकः सम्यक्कृत्याकृत्यपर्यालोचनं, विनयो गुर्वादिष्वभ्युत्थानादि एषु कुशलो निपुणः । जिताक्षो नियन्त्रितेन्द्रियो गम्भीरोऽनुपलक्षितरोषतोषविषादादि विशेषणसमासश्चानयोः । उपशमेनोपलक्षिता गुणाः शमसंवेगादयो वक्ष्यमाणास्तैर्युक्तो, नयशब्दस्य प्रत्येकमभिसम्बन्धान्निश्चयनयव्यवहारनयनिपुणः ॥४१॥ तथा जिनगुरुश्रुतभक्तिरतो व्यक्तं हितमितप्रियवचनजल्पकस्तत्र हितं पथ्यान्नवद्, मितमल्पं कार्यापेक्षमिति, अथ प्रियमाह्लादि, तच्च तद्वचनं च तज्जल्पतीत्येवंशीलः, प्राक् सामान्येन भाषापरिज्ञानमभिहितम् इह तु यथा तज्जल्पनं तथेत्यपौनरुक्त्यं, धीरो व्यसनेषु चाविक्लवः, शङ्कादयः शङ्काकाङ्क्षाविचिकित्सापरपाखण्डप्रशंसातत्संस्तवास्ते च ते, दुष्यते सम्यक्त्वमेभिरिति दोषाश्च तै रहितः । तत्र शङ्का सन्देहः, सा च सर्वविषया देशविषया च, आद्यास्ति वा नास्ति वा धर्म इत्यादि, द्वितीया त्वेकैकवस्तुधर्मगोचरा, यथास्ति जीवः केवलं सर्वगोऽसर्वगो वा सप्रदेशोऽप्रदेशो वेत्यादि, इयं च द्विधाप्यर्हत्प्रणीतप्रवचनप्रत्ययाप्रत्ययरूपा सम्यक्त्वं दूषयति, केवलागमगम्या अपि हि पदार्था असमदादिप्रमाणपरीक्षानिरपेक्षा आप्तप्रणेतृकत्वान्न सन्देग्धुं योग्या,

यत्रापि मोहवशात् क्वचन संशयो भवति तत्राप्यप्रतिहतेयमर्गला, यथा—कत्थ य मइदुव्वलेण तव्विहायरियविरहओ वावि। णेय गहणत्तणेण य नाणावरणोदए णं च ॥१॥ हेउदाहरणासं—भवे य सइ सुट्ठु जहन्न बुज्झिज्जा। सव्वन्नुमयमवितहं तहाविहं चिंतए मइमं ॥२॥ अणुवकयपराणुग्गह—परायणा जं जिणा जगप्पवरा। जियरागदोसमोहा नन्नहावाइणो तेणं ॥३॥ काङ्क्षा अन्यान्यदर्शनग्रहणं, सापि सर्वतो देशतश्च, सर्वतः सर्वपाखण्डिधर्मकाङ्क्षारूपा, एकादिदर्शनाकाङ्क्षा, तु देशाकाङ्क्षा, यथा सुगतेन भिक्षुणामक्लेशको धर्म उपदिष्टः। तथाहि—मृद्वी शय्या प्रातरुत्थाय पेया भक्तं मध्ये पानकं चापराह्ने। द्राक्षाखण्डं शर्करा चापराह्णे मोक्षश्चान्ते शाक्यपुत्रेण दृष्टः ॥१॥ एतदपि घटमानकमेव, न दुरापेतमित्यादि। इयमपि परमार्थतो जिनमतानास्थारूपा सम्यक्त्वं दूषयति। विचिकित्सा चित्तप्लवः, स च सत्यपि युक्त्यागमोपपन्ने जिनधर्मेऽस्य महतस्तपःक्लेशस्यायत्यां फलसम्पद्भाविन्यथवा क्लेशमात्रमेवेति, यतः कृषीवलादीनां क्रियाः सफला अफलाश्च दृश्यन्त इति। यदाह—पुव्वपुरिसा जहोचिय—मग्गचरा घडइ तेसिं फलजोगो। अम्हेसु धीसंघयण—विरहओ न तह तेसिं फलं ॥ १ ॥ इह च शङ्का सकला सकलपदार्थभाक्त्वेन द्रव्यगुणविषया, असौ पुनः क्रियाविषयैवेति भेदो, यद्वा विचिकित्सा सदाचारनिन्दा, यथाऽस्नाने प्रस्वेदजलक्लिन्नत्वाद् दुर्गन्धो वपुष इति को दोषः स्याद्यदि प्रासुकवारिणाङ्गप्रक्षालनममी कुर्वीरन्निति। पाखण्डप्रशंसा च सर्वतः सर्वदर्शनानि युक्तियुक्तानीति मध्यस्थप्राया दृष्टिरिदमपि सम्यक्त्वदूषणमेव, यदुक्त—सुनिश्चितं मत्सरिणो जनस्य न नाथ मुद्रामतिशेरते ते। माध्यस्थ्यमास्थाय परीक्षका ये मणौ च काचे च समानुबन्धाः ॥१॥ देशतस्त्विदमेव बुद्धादिवचनं तत्त्वमिति। इदं तु व्यक्तमेव सम्यक्त्वदूषणं,

तैः सह संस्तवः परिचयस्तत्संस्तवः । एकत्र वासे हि तत्प्रतिक्रियादर्शनात् दृढसम्यक्त्वस्यापि दृष्टिभेदः सम्भाव्यते, किमुत मन्दबुद्धेः । एवंविधगुणयुक्तोऽर्हः सम्यक्त्वरत्नस्य, अमीषां गुणानां मध्ये केचित्सम्यक्त्वलाभहेतवः, केचिद् भूषणकल्पाः, केचित्प्रतिपातप्रतिबन्धकाश्च विज्ञेया, एतावद्गुणमार्गणेन प्राप्तं चिन्तामणितुल्यं सम्यक्त्वरत्नमपात्रे समारोपयतः सिद्धान्तविराधनामाहेति गाथार्थः ॥४२॥ अथ स्वर्गापवर्गादिपरमसुखनिबन्धनसम्यक्त्वगुणशालिनां श्लाघामाह—

॥ मूलम् ॥—ते धन्ना ताण नमो ते चिय चिरजीविणो बुहा ते उ ।
जे निरइयारमेयं धरंति सम्मत्तवररयणं ॥ ४३ ॥

व्याख्या—त एव धनमर्हन्तीति धन्या आत्यन्तिकैकान्तिकधनवन्त, उक्तं हि—धनेन हीनोऽपि धनी मनुष्यो यस्यास्ति सम्यक्त्वधनं विचित्रम् । धनं भवेदेकभवे सुखाय भवे भवेऽनन्तसुखी सुदृष्टिः ॥ १ ॥ तेभ्य एव नमः, सकलगुणाधारदर्शनयुक्तत्वात्, त एव चिय एवार्थे सर्वत्र योज्यः, चिरजीविनो भवन्त्विति शेषो धर्मानुगतजीवितत्वात् । बुधाश्च त एव विवेकसम्पन्नत्वात् । तुः समुच्चये दर्शित एव, उत्तरार्धं स्पष्टं, केवलमतिचाराः प्रागभिहिता इति गाथार्थः ॥ ४३ ॥ इह च दर्शनविषयेषु कालद्रव्यत्वादिषु क्वचित् सङ्ख्याविषयात् क्वचिन्नामविषयात् क्वचिन्नास्तिताविषयात् परेषां विप्रतिपत्तिस्तन्निराकर्तुमाह—

त्रैकाल्यं द्रव्यषट्कं नवपदसहितं जीवषट्कायलेश्याः, पञ्चान्ये चास्तिकाया व्रतसमितिगतिज्ञानचारित्रभेदाः । इत्येतन् मोक्षमूलं त्रिभुवनमहितैः प्रोक्तमर्हद्भिरीशैः, प्रत्येति श्रद्धाति स्पृशति च मतिमान् यः स वै शुद्धदृष्टिः ॥ १ ॥

व्याख्या—त्रिकालमेव त्रैकाल्यं भूतभवद्भविष्यत्स्वरूपं, द्रव्याणि पुद्गलाश्रयास्तेषां षट्कं धर्मास्तिकायाधर्मास्तिकायाकाशास्तिकायकालपुद्गलास्तिकायजीवास्तिकायरूपं, पद्यन्ते गम्यन्ते सम्यग्ज्ञानिभिरिति पदानि तत्त्वानि नव च जीवाजीवादीनि तानि पदानि च तैः सहितं, षट्शब्दः सिंहावलोकितन्यायेन जीवशब्देनापि सम्बध्यते, ततः प्रत्येकं षड्जीवा, एकद्वित्रिचतुःपञ्चेन्द्रियानिन्द्रियाः, कायाः पृथ्वीकायादयो लेश्याः कृष्णाद्याः, पञ्चान्येवास्तिकाया धर्मास्तिकायादयः, कालस्तु निरुद्धसमयरूपत्वान्नास्तिकायः, पञ्चशब्दस्योत्तरपदेष्वपि सम्बन्धः । व्रतानि प्राणिवधविरमणादीनि, समितय ईर्याद्या, गतयो नारकयाद्या, ज्ञानानि, मत्यादीनि चारित्रभेदाः सामायिकादय, इतिरुल्लेखे, एतत् त्रैकाल्यादिज्ञानश्रद्धानानुष्ठानविषयतया मोक्षमूलम् । किं स्वमतिकल्पनया ? नेत्याह—त्रिभुवनमहितैः प्रोक्तमर्हद्भिरीशैस्ततश्च प्रत्येति निश्चयरूपतया जानाति, ज्ञातमपि कश्चिन्न तथेति प्रतिपद्यत इत्याह, श्रद्दधाति रोचयति, रोचयन्नपि कश्चिन्नानुतिष्ठतीत्याह, स्पृशति चासेवते, मतिमान् य, इह च प्रत्ययादीनां त्रैकाल्यादिषु यथासम्भवं योजना कार्या, स वै स्फुटं शुद्धदृष्टिः सर्वोपधाशुद्धदर्शन इति वृत्तार्थः ॥ ४३ ॥ कैः पुनर्लिङ्गैः सम्यक्त्वमस्तीति श्रद्धीयत इत्याह—

॥ मूलम् ॥—उवसमसंवेगोवि य निव्वेओवि य तहेव अणुकंपा ।
अत्थिक्कं चेव तहा सम्मत्ते लक्खणा पंच ॥ ४४ ॥

व्याख्या—उपशमोऽनन्तानुबन्धिनामनुदयो, विभक्तिलोपः प्राकृतत्वात्, अन्ये तु क्रोधकण्डुविषयतृष्णोपशान्तिरुपशम इत्याहुः । नन्वेवं कृष्णश्रेणिकादीनां सापराधे निरपराधे च परे क्रोधवतां विषयतृष्णातुराणां च कथमुपशम ? स्तदभावे च

सम्यक्त्वं न गम्येत, नैवं लिङ्गिनि सति लिङ्गैरवश्यं भाव्यमिति नायं नियमः । दृश्यते हि धूमरहितोऽप्ययस्कारगृहेषु वह्निः । अयं तु नियमः सुपरीक्षिते लिङ्गे लिङ्गी भवत्येव, यदाह--लिङ्गी लिङ्गे भवत्येव लिङ्गीन्येचेतरत्पुनः । नियमस्य विपर्यासे सम्बन्धो लिङ्गलिङ्गिनोः ॥ १ ॥ संज्वलनोदयाद्वा कृष्णादीनां क्रोधकटू विषयतृष्णे, संज्वलना अपि केचित्तीव्रतया अनन्तानुवन्धिसदृशविपाकवन्त इति सर्वमनवद्यम् , संवेगो मोक्षाभिलाषोऽपि चेति समुच्चये, एवं सर्वाण्ययानि २ । निर्वेदो भववैराग्यम् अन्ये तु संवेगो भवविरागो निर्वेदो मोक्षाभिलाष इति विपर्ययमाहुः ३ । अनुकम्पा दुःखितेष्वपक्षपातेन दुःखप्रहाणेच्छा ४ । अस्तीति मतिरस्येत्यास्तिकस्तस्य भावः कर्म वास्तिक्यं, तत्त्वान्तरश्रवणेऽपि जिनोक्ततत्त्वविषये निराकाङ्क्षाप्रतिपत्तिः । एतानि सम्यक्त्वे लक्षयितव्यानीति शेषः । लक्ष्यते गम्यते परोक्षं सम्यक्त्वमेभिरिति लक्षणानि पञ्चेति गाथार्थः ॥ ४४ ॥ अथानादिविषयकषायसंवलितात्मसु प्राणिषु कथमुपशमादि सम्भवतीत्याह–

॥ मूलम् ॥--इत्थ य परिणामो खलु जीवस्स सुहो होइ विन्नेओ ।
किं मलकलंकमुक्कं कणगं भुवि ज्झामलं होइ ॥ ४५ ॥

व्याख्या--अत्र सुसम्यक्त्वे सति परिणामो भावः, खलु निश्चयेन शुभ एव भवतीति ज्ञातव्यः । तत्प्रतिबन्धकक्लिष्टकर्मापगमात्, शुभभावरूपाश्चामी उपशमादयः उक्तस्यैव समर्थनायाह--किं मलकलङ्कमुक्तं किट्टकालिमादिरहितं कनकं भुवि ध्यामलं भवति ? नैवेत्यर्थ इति गाथार्थः ॥ ४५ ॥ सम्प्रत्युपशमादीनामेव सहेतुकफलदर्शनद्वारेण स्वरूपमुपवर्णयति--



॥२१७॥

|| मूलम् ||—पयईए कम्माणं वियाणिउं वा विवागमसुहंति ।
अवरद्धेवि न कुप्पइ उवसमओ सव्वकालंपि || ४६ ||

व्याख्या—प्रकृत्या स्वभावेन कर्मणां कषायलक्षणानां विज्ञाय वा विपाकं परिणाममशुभं कटुफलमित्यस्माद्धेतोर-पराद्धेऽपि भावोक्तविप्रिये सति न कुप्यति श्रुतत्वादपराधकारिभ्य उपशमतः सर्वकालमप्यपराधनिर्यातनासामर्थ्योत्पत्ता-वपीत्यर्थ इति गाथार्थः || || ४६ || तथा—

|| मूलम् ||—नरविबुहेसरसोक्खं दुक्खं चिय भावओ उ मन्नंतो ।
संवेगओ न मोक्खं मोत्तूणं किंपि पत्थेइ || ४७ ||

नरविबुधेश्वराणां नरेन्द्रासुरेन्द्राणां सुखमेव सौख्यं विषयसेवाजनिता मनः परितुष्टि र्दुःखानुषङ्गाद् दुःखमेव । कह तं भणइ सुक्खं सुचिरेणवि जस्स दुःक्खमल्लियइ । जं च मरणावसाणे भवसंसाराणुवंधि च || १ || भवभ्रमणानुबन्धि इति वचनाद्भावतः परमार्थतः तुः पूरणे, मन्यमानः संवेगतो न मोक्षं मुक्त्वा किमपि प्रार्थयतेऽभिलषति, मोक्षसुखस्यैव भावतः सुखत्वेन मतत्वादिति गाथार्थः || ४७ || तथा—

|| मूलम् ||—णारयतिरियणरामर—भवेसु निव्वेयओ वसइ दुक्खं ।
अकयपरलोयमग्गो ममत्तविसवेगरहिओ व || ४८ ||

व्याख्या—नारकादिभवेषु निर्वेदतो दुःखं यथा भवत्येवं वसत्यास्ते, अयमभिप्रायः—नानाविधशारीरमानसदुःख-

||२१८||

गहने संसारकारागारे कर्मदण्डपाशिकैस्तथातथा कदर्थ्यमानः प्रतिकर्तुमसमर्थो निर्वेदाद् दुःखं वसति, किंविशिष्टः सन् ? चारित्रमोहनीयपारतन्त्र्यान्न कृतः परलोको जन्मान्तरं, स पुनरिह प्रस्तावात् शुभस्तस्य मार्ग इव मार्गः कुशलानुष्ठानं येन सोऽपि, यद्वा परः प्रकृष्टः सर्वातिशायी स चासौ समुदायप्रयोगाल्लोकश्च सिद्धिक्षेत्रलक्षणः परलोकस्तस्य मार्गे प्राग्वत्, यद्यपि कर्मदोषाद्भवाब्धेर्निस्तरणोपायं नानुतिष्ठति, तथापि तत्र निर्विण्ण एवास्ते इत्यर्थः । अत एव ममत्वमेव दारुणपरिणामत्वेन विषं, तस्य वेगो लहरिस्तेन रहितोऽनित्यतादिभावनाभावितत्वेन धनस्वजनशरीरादिवस्तुषु त्यक्तात्मीयत्वाभिमान इत्यर्थोऽपि भिन्नक्रमे योजित एवेति गाथार्थः ॥ ४८ ॥ तथा—

॥ मूलम् ॥—दट्ठूण पाणिनिवहं भीमे भवसायरम्मि दुक्खत्तं ॥
अविसेसओणुकंपं दुहावि सामत्थओ कुणइ ॥ ४९ ॥

व्याख्या—पूर्वार्धं सुगमं, अविशेषतोऽपक्षपातेन, पक्षपातेन तु स्वापत्यादिषु करुणा व्याघ्रादीनामप्यस्ति, अनुकम्पा द्विधापि द्रव्यतो बाह्यापत्प्रतीकारेण, भावतश्चार्द्रहृदयतया, सामर्थ्यतः स्वशक्तिमपेक्ष्य करोत्यनुकम्पामिति गाथार्थः ॥ ४९ ॥ तथा—

॥ मूलम् ॥—मन्नइ तमेव सच्चं निस्संकं जं जिणेहिं पन्नत्तं ।
सुहपरिणामो सम्मं कंखाइविसुत्तियारहिओ ॥ ५० ॥

व्याख्या—मन्यतेऽभ्युपगच्छति तदेव सम्यक् सत्यमविसंवादि निश्शङ्कं निस्सन्देहं तत् किं ? यज्जिनैः प्रज्ञप्तं,

शुभपरिणाम आस्तिक्यलक्षणो यस्य स तथास्तिक इत्यर्थः । सम्यक्शब्दो योजित एव, काङ्क्षादय एव विश्रोतसिकाश्चित्तविप्लुतयस्ताभी रहित इति अन्ये तूपशमादीन्यन्यथा व्याचक्षते, सुपरीक्षितप्रवक्तृप्रवाच्यप्रवचनतत्त्वाभिनिवेशान्मिथ्याभिनिवेशोपशान्तिरुपशमः । यो ह्यतत्त्वं विहाय तत्त्वं प्रतिपन्नः स लक्ष्यते सम्यग्दर्शनीति १ । संवेगो भयं जिनप्रवचनानुसारिणो नरकादिषु नानादुःखमवलोकयतस्तद्भीरुतया तत्प्रशमोपायभूतं धर्ममनुतिष्ठतो लक्ष्यते विद्यतेऽस्य सम्यक्त्वमिति २ । विषयेष्वनभिषङ्गो यथा इहपरलोकयोर्दुरन्तः कामभोगाभिष्वङ्गस्तस्मादुज्झित एवमिति निर्वेदाल्लक्ष्यते सम्यक्त्वमिति ३, अनुकम्पा कृपा, यथा सर्वे एव सत्त्वाः सुखार्थिनो दुःखप्रहाणार्थिनश्च, तन्नैषामल्पापि पीडा मया कार्येत्यनयापि लक्ष्यते सम्यक्त्वम्, ४, सन्ति खलु जिनप्रवचनोपदिष्टा अतीन्द्रिया जीवपरलोकादयो भावा इति परिणाम आस्तिक्यम्, अनेनापि लक्ष्यते सम्यक्त्वमिति गाथार्थः ॥५०॥ प्रकृतमेव निगमयन् सम्यक्त्वमाह—

॥ मूलम् ॥ — **एवंविहपरिणामो सम्मद्दिट्ठी जिणेहिं पन्नत्तो ।**

**एसो उ भवसमुद्दं लंघइ थोवेण कालेण ॥ ५१ ॥**

व्याख्या——एवंविध उपशमादिरूपः परिणामो यस्य स तथा सम्यग्दृष्टिर्जिनैः प्रज्ञप्त एष एवोत्कृष्टदर्शनाराधको भवसमुद्रं लङ्घयति स्तोकेन कालेनोत्कृष्टतस्तेनैव भवेन, जघन्यतस्तृतीयेन, तथा चागमः——उक्कोसदंसणेणं भंते जीवे कइहिं भवग्गहणेहिं सिज्झिज्जा? गोयमा ! उक्कोसेणं तेणेव, तओ मुक्के तइयं नाइक्कमइत्ति गाथार्थः ॥ ५१ ॥ एवमैकान्तिकसौख्यहेतुः सम्यक्त्वमुक्तं तत्पुनर्विरतिसहायमेव ज्ञेयं, तद्विना कृतयस्य निकाचितकर्मक्षयकृतस्तपसोऽप्य-

सारत्वादिदमेवाह––

॥ मूलम् ॥––सम्मदिट्ठिस्सवि अविरयस्स न तवो बहुप्फलो होइ ।
हवइ हु हत्थिण्हाणं बुंदंच्छिययंव तं तस्स ॥ ५३ ॥

व्याख्या––मिथ्यादृष्टेस्तपसस्तावदसारत्वं सुस्थितमेव, तथाच––सट्ठिं वाससहस्सा तिसत्तखुत्तोदएण धोएण । अणुचिन्नं तामलिणा अणाणतवोत्ति अप्पफलो ॥ १ ॥ सम्यग्दृष्टेरपि सावद्ययोगेभ्योऽविरतस्य न तपोऽनशनादि बहुफलं शिवसुखफलं भवति, स्वर्गादिसुखफलं तु भवत्येव, किंतु तस्याल्पत्वात्, किमित्येवमित्याह––हुर्यस्मादर्थे, यस्मात्तत्तपस्तस्य हस्तिस्नानमिव हस्तिस्नानं भवति, यथा हि हस्ती स्नात्वा पुनर्धूलिपुञ्जमङ्गे निक्षिपति, एवमयमपि तपसा कर्म क्षपयित्वा पुनरविरत्या बध्नाति बुंदांछितकं, वात्राप्युपमानार्थो वाच्यः, बुंदं तक्ष्णामुपकरणविशेषस्तस्यां छितमाकर्षणं, एतद्धि वध्राभिरावेष्टय कराभ्यामाकृष्यते, तच्च यदा वामकरेणाकृष्यते तदा दक्षिणतो वध्रावेष्टकैः पूर्यते, यदा तु दक्षिणेन तदा वामतः । एवमयमप्येकतस्तपसा कर्म क्षपयति, अन्यतस्त्वविरततया बध्नातीति गाथार्थः ॥५३॥

उक्तमेवार्थमुदाहरणद्वारेण समर्थयितुमाह––

॥ मूलम् ॥––चरणकरणेहिं रहिओ न सिज्झई सुद्धसम्मदिट्ठीवि ।
जेणागमम्मि सिट्ठो रहंधपंगूणदिट्ठंतो ॥ ५४ ॥

व्याख्या––चरणकरणाभ्यां रहितः सुष्ठ्वपि सम्यग्दृष्टिः क्षायिकदर्शनोऽपीत्यर्थो न सिद्ध्यति, येन कारणेनागमे

सामायिकनिर्युक्तौ शिष्टः कथितो दृष्टान्तः, केषां ? रथान्धपङ्गूनां, तत्र रथदृष्टान्तो यथा––संजोगसिद्धिए फलं वयंति न हु एकचक्केण रहो पयाइ । इति अन्धपङ्गुदृष्टान्तः पुनरन्वयतो यथा––अंधो य पंगू य वणे समिच्चा । तेसिं पइत्ता नयरं पविट्ठा । व्यतिरेकतस्तु––पासंतो पंगुलो दिठ्ठो । धावमाणो य अंधओ । इति, सम्प्रदायगम्यौ पुनरिमौ, तथाहि––

कुतश्चिन्नगराल्लोकः परचक्रभयाकुलः । पलाय्य सपरिवारः किञ्चित्कान्तारमाश्रयत् ॥ १ ॥ दैवात्तत्राप्यवस्कन्द–भये कन्दलितोदये । प्रणश्य त्यक्तसर्वस्वः सदिशो विदिशो ययौ ॥ २ ॥ अन्धः पङ्गुश्च तत्र द्वा––वनाथौ केवलं स्थितौ । जजागार युगान्ताग्नि––मिवमत्रान्तरे दवः ॥ ३ ॥ तद्भयादाकुलं धावन् दृग्धीनः पङ्गुनोच्यत । सुष्ठु मागाः पुरो-भागा––देति दावानलो ज्वलन् ॥ ४ ॥ का गतिस्तर्हि मे स्यादि––त्युक्ते तेनावदत्पुनः । समा चिन्ता ममाप्येषा त्व-मन्धः पङ्गुलस्त्वहम् ॥ ५ ॥ किन्त्वारोपय मां स्कन्धे तव पादौ ममाक्षिणी । एह्येहि येन संयुज्य तरावो व्यसनार्णवम् ॥ ६ ॥ अथैवं विहिते तेन कृतसाहायकौ मिथः । तौ स्थानं वाञ्छितं प्राप्तौ न सिद्धिः किं हि संहते ॥ ७ ॥ समेते सिद्धये स्याता––मेवं ज्ञानक्रिये अपि । विधत्तास्मिन् द्वये यत्न—मसपत्नं ततो बुधाः ॥ ८ ॥

व्यतिरेकस्तु––पुरे क्वापि वियद्व्यापि—ज्वालमासीत्प्रदीपनं । आदाय तद्भिया प्राणान् प्राणश्यत्कोऽपि कुत्रचित् ॥ १ ॥ जनस्य नश्यतो वेगात् कौचिदन्धलपङ्गुलौ । वराकौ विस्मृतौ दैव––महो दुर्बलघातकम् ॥ २ ॥ धावन्नितस्त-तोऽवन्ध––मन्यः प्लोपतयाकुलः । गर्तायां पतितो दावा––त्तत्क्षणं भस्मसादभूत् ॥ ३ ॥ पश्यन् पलायितुं मार्ग––मग्नि

चोपान्तमागतम् । प्रसह्य दह्यमानाङ्गः पङ्गुलः पञ्चतां ययौ ॥ ४ ॥ तद्वद्दर्शनचारित्रे निराकाङ्क्षे परस्परम् । नैव साधीयसी स्यातां वाञ्छितार्थप्रसिद्धये ॥ ५ ॥ इति गाथार्थः ॥ ५३ ॥ अथ चरणकरणयोरेव स्वरूपमाह--

॥ मूलम् ॥--वयसमणधम्मसंजम--वेयावच्चं च बंभगुत्तीओ ।
नाणाइतियं तवकोह--निग्गहाइ चरणमेयं ॥ ५४ ॥
पिंडविसोही समिई भावण पडिमा य इंदियनिरोहो ।
पडिलेहणगुत्तीओ अभिग्गहा चेव करणं तु ॥ ५५ ॥

व्याख्या--तत्र व्रतानि प्राणातिपातविरमणादीनि पञ्च, श्रमणधर्मः क्षान्त्यादिर्दशधा, संयमः पृथिव्यादिसंरक्षणादिः सप्तदशधा, वैयावृत्त्यमाचार्यादिविषयं दशधा, स्त्रीपण्डपशुमद्वसति १, युवतिभुक्तासनं, २, मिथुनकलितकुडयान्तरः ३, सरागवनिताकथा ४, प्राक्तनसुरतचिन्तनं ५, कामिनीकमनीयाङ्गवीक्षणं ६, स्वाङ्गसंस्कारः ७, प्रणीतभोजनम् ८, अतिभोजनं ९ चेत्युज्झनस्वरूपा ब्रह्मगुप्तयो नव, ज्ञानादित्रिकं प्रसिद्धं, तपोऽनशनादि द्वादशधा, क्रोधनिग्रहादि क्रोधमानमायालोभजय एतत् किं? चरणं चारित्रमुच्यते । अत्राह--दशविधश्रमणधर्मे क्षान्तिमार्दवार्जवमुक्तीनामुक्तत्वादिह क्रोधादिनिग्रह इति न वाच्यं, पुनरुक्तत्वाद् उच्यते--तत्र तेषामासेवनरूपत्वेन विधिरूपतया सङ्गीतत्वादिहत्विमे निग्रहरूपतया प्रतिषेधरूपाः परिज्ञातव्यास्ततो न पौनरुक्त्यं विधिप्रतिषेधयोर्भिन्नलक्षणत्वाद्, अथवा तत्र क्षान्त्यादिचतुष्टयग्रहणेन क्रोधाधिचतुष्टयनिग्रह उक्त इह तु साधोरपि तथाभूतकारणवशाद् बलात्क्रोधादिविजृम्भणे तत्फलविपाकसंवेदनेन

विफलतापादनं कार्यमिति क्रोधादिनिग्रह इत्युक्तमतो न पौनरुक्त्यम् ।

ननु च संयमतपसी अपि दशविधश्रमणधर्मग्रहणादुक्ते एव, तत्कथं पृथगुपन्यासेन ? उच्यते—प्राधान्यख्यापनार्थं, तथाहि—संयमो गुप्तिकृत्, तपस्तु प्रागुपात्तकर्मक्षयकृदिति, एवं तर्हि वैयावृत्त्यग्रहणं न कार्यं, द्वादशतपोग्रहणेनैवोक्तत्वाद्, उच्यते—एकादशविधं तप आत्मन एवोपकारि, इदं तु स्वपरोपकारित्वेन प्रधानमिति भेदोपन्यासभागित्यदोषः ननु चैवं विनयः कस्मान्न पृथगुक्तः ? असावप्युभयोरप्युपकारक इति, उच्यते—उक्त एवासौ 'वेयावच्चं चेति' चशब्दग्रहणात् ननु च चारित्रग्रहणं न कार्यं, व्रतग्रहणादेवास्योक्तत्वाद्, न, चारित्रं समुदायरूपं, व्रतानि तु चारित्रैकदेशस्ततश्च व्रतग्रहणेनाशेषचारित्रग्रहणमिति । तथा च सामान्यविशेषयोः कथञ्चिद्भेद एवेत्युक्तं चरणम् ॥ ५४ ॥ तथा पिण्डस्य चतुर्विधाहारस्योपलक्षणत्वाच्छय्यावस्त्रपात्राणां च विशुद्धिरुद्गमोत्पादनैषणादोषमलाभावः, समितयः पञ्चेर्यादय भावना अनित्यादयो द्वादश, इन्द्रियाणि स्पर्शनादीनि पञ्च, तेषां निरोध इष्टानिष्टविषयेषु रागद्वेषपरिहारेण जयः, प्रतिलेखना वस्त्रपात्रादीनां पञ्चविंशतिधा, गुप्तयस्तिस्रो मनोगुप्त्यादय, अभिग्रहा द्रव्यक्षेत्रकालभावविषयाश्चतुर्विधा, चः समुच्चये, एवत्ति एवं, तुः पुनरर्थे, तेनैतदुक्तं भवति, करणं पुनरेवं भवति । ननु चरणं करणं चेति किं कृतो नामभेदः ? द्वयोरप्यासेवनारूपत्वात् उच्यते—चरणं मूलगुणरूपं, करणं तूत्तरगुणस्वभावमिति अत एव चर्यत इति चरणं मततासेवनारूपं, तथाहि—व्रतादीनां यावत्कथं सततमासेव्यमानत्वात्, करणं तु कादाचित्कं, तथाह्यभक्तार्थी न पिण्डमादत्ते । एवं समितयोऽपि कादाचित्काः सर्वदा गमनादेरयोगात्, भावना अपि विशिष्टकालविषया ध्यानोपरमादिषु

भाव्यमानत्वात्. प्रतिमा अपि विशिष्टपुरुषकालविषया एव तथेन्द्रियनिरोधोऽपीष्टानिष्टविषयप्राप्तौ रागादिवर्जनं क्वचित् प्रत्युपेक्षणापि विशिष्टकालविषयैव, गुप्तयोऽप्यनियता एव, क्वचित्सङ्कुचितकायाद्यवस्थासु सम्भवात् , अभिग्रहा अपि क्वचिदेव काले पुरुषे वा स्युरिति। तदियता क्रियासहचरितमेव सम्यग्दर्शनं मोक्षायेति स्थापितमिति गाथाद्वयार्थः ॥ ५५ ॥ अथ सम्यग्दर्शनक्रिययोः सहकारित्वे सति किं केन स्वभावेनोपकुरुते ? किमविशेषेण शिविकोद्वाहकपुरुषवद् उत भिन्नस्वभावतया गमनक्रियायां नयनचरणादिवद् , अत्रोच्यते, भिन्नस्वभावतया, अत आह—

॥ मूलम् ॥—सम्मग्गस्स पयासगं इह भवे णाणं तवो सोहणं,
कम्माणं चिरसंचियाण निययं गुत्तीकरो संजमो।
बोधव्वो नवकम्मुणो नियमणे भावेह एयं सया,
एसि तिण्हवि संगमेण भणिओ मोक्खो जिणिंदागमे ॥ ५६ ॥

व्याख्या—तत्र कचवरसमन्वितमहागृहशोधने प्रदीपपुरुषादिव्यापारवदिह कर्मकचवरभूतशोधनालम्बनो ज्ञानादीनां स्वभावभेदेन व्यापारोऽवसेय इति समुदायार्थः। अवयवार्थस्तु सन्मार्गस्य मोक्षाध्वनः प्रकाशकमिह सहकारिव्यापारविचारे भवेद् ज्ञानं प्रदीपवत् , क्रिया तु तपः संयमरूपतया द्विधा, तत्र यत् शोधयतीति शोधनं कर्मणां चिरसञ्चितानां, कर्मकरपुरुष इव कचवरस्य, नियतं निश्चितं गुप्तिकरो निरोधकः संयमो बोधव्यः, कस्य ? नवकर्मण आगन्तुकपाप्मनः, पवनप्रेरितकचवरादिनिरोधकवातायनादिस्थगनवत् , निजमनसि भावय, नैवं सदा न पुनरेकमेव ज्ञानं क्रिया वा सर्वत्र

प्रकाशादिष्वलमेवंरूपाभ्युपगमस्य मिथ्यात्वाद् , यदाह—

॥ मूलम् ॥—नाणाहीणं सव्वं नाणनओ भणइ किंच किरियाए ।
चरणनओ किरियाए तदुभयगा हा उ सम्मत्तं ॥ १ ॥ इति ।

एतदेव पर्यवसितमाह—

एषां त्रयाणामेव ज्ञानादीनामपिशब्दोऽवधारणार्थसम्भावने वा, किं सम्भावयति ? निश्चयतः क्षायिकानां न तु क्षायोपशमिकानां सङ्गमेन भणितो मोक्षः सर्वथाष्टकर्ममलविगमलक्षणो जिनेन्द्रागमे इति । ननु पूर्वं सम्यग्दर्शनक्रिययोः सहकारित्वं प्रस्तावितं, इह तु सम्यग्दर्शनस्य नामापि नोपात्तं, तत्कथं न पूर्वापरविरोधः न तस्य रुचिरूपत्वेन ज्ञानविशेषत्वात्तद्ग्रहणेनैव भणनमवसेयम् , एवं च सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग इत्येतदपि सुप्रतिष्ठितमिति ज्ञानतपः शब्दोपादानेन अन्तमङ्गलमनेनाविष्कृतमिति वृत्तार्थः ॥ ५६ ॥ साम्प्रतं सूत्रकारः स्वाभिधान भङ्ग्या प्रतिपादयन् यदादौ यत्तुच्छमतीनामनुग्रहायेति प्रतिज्ञातं तन्निर्वहणेनोपसंहरति--

॥ मूलम् ॥—चंदादिपहवरसूरि—पयनिवहपढमवन्नेहिं ।
जेसिं नामं तेहिं परोवयारंमि निरएहिं ॥ ५७ ॥
इय पायं पुव्वायरिय—रइयगाहाण संगहो एसो ।
विहिओ अणुग्गहत्थं कुमग्गलग्गाण जीवाणं ॥ ५८ ॥

व्याख्या--चन्द्रादिपदनिवहप्रथमवर्णैर्येषां नाम तच्चन्द्रप्रभसूरिरिति, तैः परोपकारनिरतैरिति किमित्याह--इतिः समाप्तौ, प्रायो बाहुल्येन पूर्वाचार्यरचितगाथानां सङ्ग्रह इतस्ततो भणितानामिह सञ्चय एष साक्षादुक्तो भणितः, प्राय इत्यनेन च सूत्रतः स्वोपज्ञा अपि काश्चनगाथाः सन्तीत्यावेदयति, अनुग्रहार्थं कुमार्गलग्नानां जीवानामेतद्भणनं चामीषां विशेषानुकम्पनीयत्वख्यापनार्थं, यतः--सुहसीलत्तेण गहिए भवपल्लि तेण जगडियमणाहो । जो कुणइज्जवियत्तं सोवन्नं कुणइ तित्थस्स ॥१॥ कुमार्गलग्नत्वं च तेषामज्ञानतया न पुनरभिनिविष्टतयेति गाथाद्वयार्थः ॥५८॥ तथा चाह-

॥ मूलम् ॥--जे मज्झत्था धम्म--त्थिणो य जेसिं च आगमे दिट्ठी ।
तेसिं उवयारकरो एसो न उ संकिलिट्ठाणं ॥ ५९ ॥

व्याख्या--ये मध्यस्था अपक्षपातिनस्ते पुनरुदासीना अपि स्युर्नेत्याह, धर्मार्थिनश्च धर्मश्रद्धालवस्तेऽपि स्वमति-प्रवृत्तयो धूर्तविप्रतारिता वा स्यु र्न, येषां चागमे दृष्टिर्दर्शनं श्रद्धानं बहुमतिरिति यावद् । तेषामुपकारकरो हितकृदेष ग्रन्थो न तु सङ्क्लिष्टानां रागद्वेषोपहतमनोवृत्तीनां तेषामुपकर्तुमशक्यत्वात्, तथाच--रागासक्ते चेतसि धर्मकथा स्थानमेव नो लभते । नीलीरक्ते वाससि कुङ्कुमरागो दुराधेयः ॥ १ ॥ इति गाथार्थः ॥ ५९ ॥ अथैतस्या दर्शनशुद्धेर्विद्वच्चेतसि गौरवमारोपयन्नामान्याह--

॥ मूलम् ॥--उवएसरयणकोसं संदेहविसोसहिं च विउयजणा ।
अहवावि पंचरयणं दंसणसुद्धिं इमं भणह ॥ ६० ॥

व्याख्या--उपदेशा एव समीहितसाधकत्वेन रत्नानि तेषां कोशो निधिस्तं, सन्देह एव व्यामोहकत्वेन विषं तस्यौषधिस्तां वा अथवापीति समुच्चये, रत्नानीव रत्नानि अगण्यप्रायत्नतस्ततश्च पञ्चानां देवगुरुधर्ममार्गसाधुतत्त्वलक्षणानां रत्नानां समाहारः पञ्चरत्नं दर्शनस्य सम्यक्त्वस्य शुद्धिहेतुत्वाच्छुद्धिस्तामिमां हे विद्वज्जना भणतेति सर्वत्र योग इति गाथार्थः ॥ ६० ॥

अथैतत्स्वरूपनिरूपणपुरस्सर भव्यानामुपदेशरूपतया पठनाद्याशिषः प्राह—

॥ मूलम् ॥--मिच्छमहण्णवतारण-तरियं आगमसमुद्दबिंदुसमं ।
कुग्गहग्गहमंतं संदेहविसोसहिं परमं ॥ ६१ ॥
एयं दंसणसोहिं सव्वे भव्वा पढंतु निसुणंतु ।
जाणंतु कुणंतु लहंतु सिवसुहं सासयं झत्ति ॥ ६२ ॥

व्याख्या--मिथ्या अज्ञानात् कुशास्त्रश्रवणाद्वा विपर्ययः, स एव दुर्लङ्घत्वेन महार्णवस्तस्य तारणे तरीं नावं, अनेनाभिग्रहिकानाभिग्रहिकानाभोगजमिथ्यात्वस्य निरासः । आगमसमुद्रे बिन्दुसमां, कुग्राहः कदभिनिवेशः स एवासच्चेष्टाप्रवर्तकत्वेन ग्रहो भूताद्यावेशस्तदुच्चाटने मन्त्रम्, अनेनाभिनिवेशिकस्य सन्देहविषौषधिं प्रागवत् , अनेन तु सांशयिकस्य परमामेकान्तिकात्यन्तिकीं, प्राग् नामप्रस्तावेनैतदुक्तम् इह तु स्वरूपनिरूपणद्वारेणेति न पौनरुक्त्यं, विशेषणैश्चामीभिः

पञ्चविधमिथ्यात्वनिरासदर्शिभि र्यदुक्तमादौ 'तं किंपि सिक्खियव्वं जं कज्जकरं चत्ति' तत्संवर्गितं, आगमसमुद्रविन्दुसमत्वेन च यदुक्तं 'थोवं चत्ति' तदिति । एतां दर्शनशुद्धिं सर्वे भव्याः पठन्तु स्तवतः, निशृण्वन्त्वर्थतः । ततश्च जानन्तु द्वेधापि, ततोऽपि च ज्ञानस्य फलं विरतिरिति कृत्वा कुर्वन्तु एतदुक्तमनुतिष्ठन्तु तदनुष्ठानस्य तु शिवसुखसाधनं प्रत्यविकलकारणत्वाल्लभन्तां शिवसुखं शाश्वतं झटिति, तदर्थत्वात्सर्वानुष्ठानानामिति गाथाद्वयार्थः ॥६५॥ इति श्रीदेवभद्रसूरिविरचिते दर्शनशुद्धिप्रकरणविवरणे पञ्चमं जीवादितत्त्वं समाप्तम् ॥ श्रीरस्तु ॥

किमप्यूहाद् ग्रन्थान्तरविवरणेभ्यश्च किमपि ज्ञसाचिव्यात् किञ्चिन्निजगुरुमुखाचाप्य किमपि। इयं दृब्धा वृत्तिस्तदपि यदसत् किञ्चिदुदितं विशोध्यं तत्प्राज्ञैरविशदमतिर्मुह्यति न कः ॥ १ ॥ आस्ते तुङ्गो घनाभोगः सुप्रतिष्ठो भुवस्तले । आस्थानं द्विजसार्थानां श्रीकोटिकगणद्रुमः ॥२॥ तत्रायता घनच्छाया सुमनःस्तोमसंस्तुता । वैरशाखास्ति विख्याता सदैव फलशालिनी ॥ ३ ॥ गोभिः सुधामयस्याभि--स्तर्पिताशेषभूतलं तस्यां सुवृत्तसंशोभि चान्द्रं विजयते कुलं ॥ ४ ॥ अर्हच्छासनकाननैकवसतिर्व्याख्यानगुञ्जारवैः श्रोतृस्वान्तनिकुञ्जकल्मषमृगानुत्त्रासयन् सर्वतः । प्रोन्मादिप्रतिवादिवारणघटाविक्षोभदक्षोऽभव--त्तत्र जयसिंह इत्यवितथख्यातिं दधानः प्रभुः ॥ ४ ॥ तच्छिष्यः समजायताद्भुतनिधिश्चारित्रिणामग्रणीः शास्त्रस्यास्य विधायकः कुशलधीर्निःशेषशास्त्राध्वनि । लुप्तस्येह चिराच्चिरन्तनविधेरुद्धारकर्ता कलौ श्रीचन्द्रप्रभसूरि रित्यभिधया ख्यात· क्षितौ सद्गुरुः ॥५॥ एतत्पट्टधुरन्धरः शमनिधिः श्रेष्ठस्तपः- शालिनां । प्रह्वः श्रीजयसिंहभूपतिशिरोरत्नांशुधौतक्रमः । अर्हच्छासनवार्धिवर्धनविधौ ताराधिनाथोऽभव--द्भव्याम्भोजवनप्रबोधनरविः श्रीधर्मघोष

प्रभुः ॥ ६ ॥ आचार्येण कुलीनता सुभगता रूपेण शान्त्या तपः स्वामित्वेन गुणज्ञता विदुरता शीलेन दाक्ष्यं श्रिया । इत्थं यस्य पुरं कुटुम्बिन इवाध्यूषुर्गुणाः सुस्थिताः शिष्यस्तस्य समन्तभद्रगणभृत्सोऽभूज्जगद्दीपकः ॥ ७ ॥ शिष्यस्तस्याथ चन्द्रप्रभवरगुरोरद्वितीयो द्वितीयोबन्धुः श्रीधर्मघोषाभिधमुनिवृषभस्यानुजातोऽभिजातः । प्रज्ञाप्राग्भारपश्चात्कृतविबुधगुरुर्वाचनासूरिरुच्चै--रग्र गण्यो मुनीनां विमलगणिरिति श्लाघ्यनामा बभूव ॥ ८ ॥ सरसा विचारबहुला सच्चक्रानन्दहेतुरस्ताघा । दर्शनशुद्धवृत्तिः क्षमाभृतोऽजनि नदीव यतः ॥ ९ ॥ सूरिः श्रीदेवभद्राख्य--स्तस्यशिष्योऽस्ति निर्मलधीः । प्रतिष्ठितः स्वयं श्रीम--द्धर्मघोषाख्यसूरिभिः ॥ १० ॥ गुरोस्तेन बृहद्वृत्ति--रुद्वृत्तिः कतिचिल्लवा । निबद्धा वृत्तिरूपेण सत्त्वानां हितकाम्यया ॥११॥ सूरेः श्रीशान्तिभद्राख्य--स्वशिष्यस्य महामतेः । साहाय्यादयमारम्भो कोटिमटीकत ॥ १२ ॥ मुनिप्रभाभिधानेन दृषैषा स्फुटाक्षरा । अलेखि प्रथमादर्शे विश्वविज्ञानशालिना ॥ १३ ॥ ग्रन्थाग्रं श्लोकमानेन वृत्तावस्यामुदीरितम् । बुधैस्त्रीणि सहस्राणि संयुतान्यष्टभिः शतैः ॥१४॥ यावद्व्योमवने निरायतकरैर्नक्षत्रपुष्पावलीं विन्यस्य परिवर्तते प्रतिदिनं भास्वान्महामालिकः । ग्रन्थस्तावदयं सुवर्णनिधिवन्नानार्थसिद्धिप्रद--स्तत्त्वप्रीतितरस्विनां कृतधियां चेतश्चिरं चुम्बतु ॥ १५ ॥ श्रीरस्तु ॥



॥२३०॥